तन्महिम्ना जगदशून्यं दृष्ट्वा पदार्थान्तरस्याभावं मन्यमानस्तामेव भूमिं कैवल्यमिति गृह्णाति। स तस्यामेव देहभेदे लीयते। ततश्च पुनरावर्तत इति।

आह, कालभाग्ययोरप्रतिपत्तिः, समाख्यापरिज्ञानात्। प्रकृत्यात्मकस्य तावद्योगिनोऽष्टौ प्रकृतयो विषय इत्युक्तं पुरस्तात्। उपादानात्मकस्य च पृथिव्यादीनि महाभूतानि। कालभाग्ययोस्तु न तथोक्तम्। तस्माद्वक्तव्यं कस्य तत्त्वस्यैषा समाख्येति ? उच्यते—न, उक्तत्वात्। प्रागेवैतदपदिष्टं न कालो नाम कश्चित्पदार्थोऽस्ति। किं तर्हि क्रियासु कालसंज्ञा। ताश्च करणवृत्तिरिति प्रतिपादितम्। न चान्या वृत्तिर्वृत्तिमतः। तस्मात्कारणचैतन्यप्रतिज्ञः कालात्मक इति। भाग्यसंज्ञा तु धर्माधर्मयोः। तौ च बुद्धिधर्माविति प्रागपदिष्टम्। तस्माद् भाग्यवादी बुद्धिचैतनिक इति। आह, न, तुष्ट्यन्तरत्वात्। प्रकृतित्वान्महान्पूर्वं प्रकृत्याख्यायां तुष्टाववरुद्धः। तस्येदानीं तुष्ट्यन्तरत्वेन परिकल्पनं नातिसमञ्जसमिति। उच्यते—महांस्तर्हि पूर्वतुष्टिविषयभावादपकृष्यत इति। अथवा कार्यकरणवृत्तिक्रियारूपां वृत्तिमद्द्योत्यां परिकल्प्य तस्यां कालत्वमयमाह। महतश्च रूपं धर्मादिकं महतोऽर्थान्तरं भाग्यमिति भाग्यवान्। अथवा बाह्य एवायं कालः कर्मकारणं निर्दिश्यते। तत्र चान्येऽपि स्वमतिपरिकल्पितपदार्थान्तरात्मभावग्राहा[1] एवाति[2]साङ्ख्याः प्रवादिनः प्रतिक्षिप्ता बोद्धव्या इति।

अपर आह, प्रकृतिचैतनिकः प्रधानभावाशाद्युपादानकालभाग्यवादिनो महदहङ्कारतन्मात्रवादिन इति। तदेतदपसिद्धत्वादयुक्तम्। न हि महदहङ्कारतन्मात्रलक्षणाः प्रकृतय उपादानकालभाग्यभावेन प्रसिद्धाः। तस्मादिदमप्ययुक्तम्। एवमेता आध्यात्मिक्यश्चतस्रस्तुष्टयः।

बाह्या विषयोपरमात् पञ्च [3]च नव तुष्टयोऽभिहिताः ॥५०॥

चशब्दोऽवधारणार्थः। अव्युत्पन्नात्मविचारस्य योगिनो विषयदोषदर्शनमात्रात्संगदोषनिवृत्तिर्बाह्या तुष्टिः। तत्र यदाऽर्जनदोषमवगच्छति न तावत्सर्वस्याभिजातिरस्तीति अर्थिनाऽवश्यं विषयार्जने वर्तितव्यम्। तेषामस्वाभाविकत्वात्क्वचिदेवावस्थितिरित्युक्तं प्राक्। किं च सप्रत्यनीकत्वात्। स्वाभाविकमवस्थानं विषयाणामपरिकल्प्याऽपि यदा प्रतिग्रहादिभिरर्जनं प्रत्याद्रियते तदप्ययुक्तम्। कुतः ? सप्रत्यनीकत्वात्। एवमपि नास्ति कश्चिदप्रत्यनीको विषयार्जनोपाय इति तद्विघातेऽवश्यं प्रयतितव्यम्। स च यदि प्रतियतमानः प्रत्यनीकिविघातं कुर्यात्परोपघातेनात्माऽनुग्रहानुष्ठानाच्छास्त्रविरोधः। यस्मादाह—

न तत्परस्य सन्दध्यातप्रतिकूलं यदात्मनः।
एष संक्षेपतो धर्मः कामादन्यः प्रवर्तते ॥

पुनरप्याह—

प्राणिनामुपघातेन योऽर्थः समुपजायते।
सोऽनपेक्षैः प्रहातव्यो लोकान्तरविघातकृत् ॥

१. There is a small gap here in Pna. Ch. thinks that some words are omitted. But no omission seems likely.

२. Ch. एवैते for एवाति

३. Ch. omits च।



तस्मात्संघातमात्रत्वात्सत्त्वादीनां घटादिवत्।
आब्रह्मणः परिज्ञाय देहानामनवस्थितिम् ॥
इतस्त्यं सद्भिरादीप्तं तृणोल्काचपलं सुखम्।
[1]सुदृढैर्न निपातव्यं दुःखैर्देहान्तरोद्भवैः ॥

अथ पुनरयं प्रत्यनीकैर्विहन्यते, ततोऽस्य विषयाभावः। सुखार्थं च प्रवृत्तस्य भूयिष्ठं दुःखमेवेत्येतस्माद्दर्शनान्माध्यस्थ्यं लभते, सा पञ्चमी तुष्टिः सुतारमित्यभिधीयते। कथं पुनः सुतारमित्युच्यते ? सुखमनेनोपायेन तरन्ति विषयसंकटमिति सुतारम्। यदा तु योगी पूर्वदोषाधिगमेऽभिजात्या वा यत्नार्जितविषयत्वे सति रक्षादोषमुपन्यस्यति। कथम्? भोक्तृभोग्यभावाऽव्यतिरेकात् सर्वप्राणिसाधारणा विषयाः, तस्मात्तेषां रक्षा विधेया। तस्यां च प्रवर्तमानो यदि परमुपरु[2]न्ध्यात् तदा पूर्वोक्तदोषः, अथात्मानं, विषयाभावः। रात्रिन्दिवं च तदेकाग्रमनसः सुखार्थं प्रवृत्तस्य भूयिष्ठं दुःखमेवेत्येतस्माद्दर्शनान्माध्यस्थ्यं लभते। सा षष्ठी तुष्टिः सुपारमित्यभिधीयते। कथं पुनः सुपारमित्युच्यते ? सुखमनेन पारं विषयार्णवस्य प्रयान्तीति। यदा तु सति पूर्वदोषे, सति वा ग्रामनगरनिगमसन्निवेशाद्युपायानुष्ठानाद्वा कृतविषयरक्षो योगी क्षयदोषमुपन्यस्यति। कथम् ?

येन द्रव्येण मोहाद्वा रन्तु[3]मिच्छन्ति देहिनः।
तदेवैषां विनाशित्वाद् भवत्यरतिकारणम् ॥
यत्नोपात्ताः सुगुप्ताश्च विषया विषयैषिणाम्।
पश्यतामेव नश्यन्ति बुद्बुदाः सलिले यथा ॥
न तदस्ति जगत्यस्मिन्भूतं स्थावरजङ्गमम्।
प्रत्यक्षतोऽनुमानाद् वा विनाशो यस्य नेक्ष्यते ॥
तस्माद्विनाशिष्वासक्तानां पुत्रदारगृहादिषु।
ममेति बुद्धिं यत्नेन बुद्धिमान्विनिवर्तयेत् ॥

इति एतस्माद्दर्शनान्माध्यस्थ्यं लभते, सा सप्तमी तुष्टिः सुनेत्रमित्युच्यते। कथं पुनः सुनेत्रमित्युच्यते ? सुखमनेनात्मानं कैवल्याऽवस्थां नयन्तीति सुनेत्रम्। यदा तु सत्सु पूर्वदोषेषु प्रसङ्गदोषमुपन्यस्यति। कथम् ? प्राप्तविषयाणामिन्द्रियाणां तदभिलाषान्निवृत्तिस्ततसुखम्। विषयजिघृक्षया च दुःखम्। प्राप्तिरप्येषामनुपशान्तये तदुपभोगकौशलाय च। यस्मादाह—

यदा प्रबन्धाद्विषयी विषयानुपसेवते।
तदास्येत[4]स्त्वभिप्रायः सुतरां संप्रवर्तते ॥
अतोऽपि येन पुरुषः शमयेद् बडवानलम्।
नेन्द्रियाण्युपभोगेन विषयेभ्यो निवर्तयेत् ॥
तस्माद्विषयसम्पर्कमसमर्थं निवर्तने।
इन्द्रियाणां परिज्ञाय निरासङ्गमतिश्चरेत् ॥

इत्येतस्माद् दर्शनान्माध्यस्थ्यं लभते साऽष्टमी तुष्टिः सुमारीचमित्युच्यते। कथं सुमारीच-

१. Ch. सदृढैः, against Pna.

२. Ch. परमुपहन्यात्, against Pna.

३. Pna. मोहात्पारन्तुमिच्छन्ति. . . ।

४. Pna. तदास्येतत्त्वभिप्रायः।

मित्युच्यते ? अर्चतेः पूजार्थस्य शोभनमर्चितं विषयसंगनिवृत्तस्य योगिनोऽवस्थानं भवति । यदा तु पूर्वदोषेषु हिंसादोषमुपन्यस्यति । कथम् ? अनुपहत्याऽन्यभूतानि विषयभोगाऽनुपपत्तेः । उपभोगो हि नाम मनोज्ञाभ्यवहारः, स्त्रीसेवा, हयगजनरादिभिर्यानमित्येवमादि । तत्र मनोज्ञाऽभ्यवहारचिकीर्षुणा तदङ्गानां गोऽजाऽविबलीवर्दस्त्रीपुरुषादीनामवश्यमुपघातः कार्यः । अनुपघाते वा विषयाऽनुपपत्तिप्रसंगः । स्त्रियमासेवमानेनाऽन्यासां स्त्रीणां मातृपितृभ्रातृप्रभृतीनां च, अन्यथा तदभावो हयादीनाम् । तस्मादुपभोगार्थिनाऽवश्यमन्योपघातः कार्यो निहितदण्डेन वा विषयोपभोगस्त्याज्य इति । आह च

यथा यथा हि विषयो वृद्धिं गृह्णाति देहिनाम् ।
अपघातस्तदङ्गानां तथैवास्य विवर्धते ॥
तस्मादनिच्छन्नन्येषां प्राणिनां देहपीडनम् ।
सन्तोषेणैव वर्तेत त्यक्तसर्वपरिच्छदः ॥
सत्यवाचः प्रशान्तस्य सर्वभूतान्यनिच्छतः ।
भावान्धकारान्तज्ज्ञान[1]मचिरेण प्रवर्तते ॥

इत्येतस्माद्दर्शनान्माध्यस्थ्यं लभते, सा नवमी तुष्टिरुत्तमाऽभयमित्यपदिश्यते । कथम् ? उत्तमं हि प्राणिनां सर्वेभ्यो भयेभ्यो हिंसाभयमिति तदपगमादुत्तमाऽभयमिति ।[2] आह, अर्जनरक्षणलक्षणयोरपि तुष्ट्योः परोपघातदोषाः, अपदिष्टोऽस्यामपि च । तत्र कथमनयोर्विशेषः प्रतिपत्तव्य इति ? उच्यते न, विषयभेदात् ।[2] तत्र येषामर्जनरक्षणे प्रत्याद्रियते विषयी तदर्थिना प्रत्यनीकानामवश्यमभिघातोऽनुष्ठातव्य इत्यादावुक्तम् । इह तु येषामेवार्जनरक्षणे तदनुपघातेनाऽशक्यो विषयोपभोग इत्येतद्विवक्षितम् । तस्मादसंकीर्णमेतदित्येवमम्भःप्रभृतयो नव विषयेभ्यः संगद्वेषनिवृत्तिहेतवो व्याख्याताः । ते ज्ञानविरहितानां योगिनां तुष्टिशब्दवाच्यतां लभन्ते । ज्ञानिनां तु वैराग्यपर्वसंज्ञिता स्वासु स्वासु तत्त्वभूमिषु सिद्धा एवेति ॥५०॥

आह, प्रागपदिष्टमष्टधा सिद्धिरिति तदिदानीमभिधीयतामिति । उच्यते—

ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः ।
दानं च सिद्धयोऽष्टौ

तत्रोहो नाम यदा प्रत्यक्षाऽनुमानागमव्यतिरेकेणाऽभिप्रेतमर्थं विचारणाबलेनैव प्रतिपद्यते, साद्या सिद्धिः तारकमित्यपदिश्यते । तारयति संसारार्णवादिति तारकम् । यदा तु स्वयं प्रतिपत्तौ प्रतिहन्यमानो गुरूपदेशात्प्रतिपद्यते सा द्वितीया सिद्धिः, सुतारमित्यपदिश्यते । कथम् ? सुखमनेनाद्यत्वेऽपि भवसंकटात्तरन्तीति । यदा त्वन्योपदेशादप्यसमर्थः प्रतिपत्तुमध्ययनेन साधयति सा तृतीया सिद्धिः, तारयन्तमित्यपदिष्यते । तदेतत्तारणक्रियाया अद्यत्वे[3]ऽपि अव्यावृत्तत्वान्महा-

१. Ch. भावान्धकारान्न ज्ञान°, against Pna.

२...२. Ch. reads the next sentence here and omits it at its place. Thus after उत्तमाऽभयमिति he reads—परोपघातदोषः अपदिष्टोऽस्यामपि च । तत्र कथमनयोर्विशेषः प्रतिपत्तव्य इति । उच्यते न, विषयभेदात् । आह–अर्जनलक्षणयोरपि तुष्टचोः । This is obviously due to carelessness.

३. Ch. आश्रयत्वेऽपि, against Pna.



विषयत्वात्तारयन्तमित्यपदिष्टम् ।[1] त एते त्रयः साधनोपायैराब्रह्मणः प्राणिनो ऽभिप्रेतमर्थं प्राप्नुवन्ति । आह, च—"साक्षात्कृतधर्माण ऋषयो बभूवुः । ते ऽपरेभ्योऽसाक्षात्कृतधर्मेभ्य उपदेशेन मंत्रान्सम्प्रादुरुपदेशाय ग्लायन्तोऽपरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुः वेदं च वेदाङ्गानि चेति ।"[2] बिल्मं भासनं [3]सम्यक्प्रतिभासाय विशिष्टः संकेत उक्तः । एषां तु साधनोपायानां प्रत्यनीकप्रतिषेधाय दुःखविघातत्रयम् । दुःखानि त्रीण्याध्यात्मिकादीनि । तत्र चाध्यात्मिकानां वातादीनां सिद्धिप्रत्यनीकानामायुर्वेदक्रियानुष्ठानेन विघातं कृत्वा पूर्वेषां त्रयाणामन्यतमेन साधयति, सा चतुर्थी सिद्धिः प्रमोदमित्यभिधीयते । कथम् ? निवृत्तरोगा हि प्राणिनः प्रमोदन्त इति कृत्वा । यदा त्वाधिभौतिकानां मानुषादिनिमित्तानां सिद्धिप्रत्यनीकानां सामादिना यतिधर्मानुगुणेन वोपायेन पूर्वेषां त्रयाणामन्यतमेन साधयति, सा पञ्चमी सिद्धिः प्रमुदितमित्यभिधीयते । कथम् ? अनुद्विग्नो हि प्रमुदित इति कृत्वा । यदा तु शीतादीन्याधिदैविकानि द्वन्द्वानि सिद्धिप्रत्यनीकानि स्वधर्मानुरोधेन प्रतिहत्य पूर्वेषां त्रयाणामन्यतमेन साधयति, सा षष्ठी सिद्धिर्मोदमानमित्यभिधीयते । कथम् ? द्वन्द्वाऽनुपहता हि प्राणिनो मोदन्त इति कृत्वा । सुहृत्प्राप्तिः । यदा तु कुशलसंस्पृष्टं सन्मित्रमाश्रित्य सन्देहनिर्वृत्तिं लभते, सा रम्यकमिति सप्तमी सिद्धिरपदिश्यते । रम्यो हि लोके सन्मित्रसम्पर्कः । तस्य संज्ञायां रम्यमेव रम्यकम् । दानम् । यदा तु दौर्भाग्यं दानेनातीत्य पूर्वेषां त्रयाणामन्यतमेन साधयति साऽष्टमी सिद्धिः सदाप्रमुदितमित्यभिधीयते । सुभगो हि सदाप्रमुदितो भवति । तस्माद्दौर्भाग्यनिवृत्तिः सदाप्रमुदितम् । इत्येवमेताः सिद्धयोऽष्टौ व्याख्याताः । एतासां संश्रयेणाऽभिप्रेतमर्थं यतः संसाधयन्तीत्यतः पूर्वाचार्यागतं मार्गमारुरुक्षुस्तत्प्रवणः स्यादिति ।

आह, कः पुनरत्र हेतुर्येन पुरुषार्थत्वाविशेषे सति गुणानां सर्वसिद्धिनिमित्तं त्वनुभवतीति ? उच्यते—यस्मात्

सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः ॥५१॥

साध्यप्रतिपत्तिसामर्थ्यसामान्यमङ्गीकृत्याह सिद्धेरिति । पूर्वो विपर्ययाशक्तितुष्टिलक्षणः अंकुश इवांकुशः, निवर्तनसामान्यात् । नित्यप्रवृत्तस्यापि प्रधानात्सिद्धिस्रोतसो विपर्ययाऽशक्तितुष्टिप्रतिबन्धात्सर्वप्राणिष्वप्रवृत्तिर्भवति । विपर्ययात्तावत्स्थावरेषु । ते हि मुख्याःस्रोतसो विपर्ययात्मानः । अशक्तेस्तिर्यक्षु । ते हि तिर्यक्स्रोतसोऽशक्त्यात्मानः । तुष्टिर्देवेषु । ते ह्यूर्ध्वस्रोतसस्तुष्ट्यात्मानः । मानुषास्त्वर्वाक्स्रोतसः संसिद्ध्यात्मानः । तस्मात्त एव तारकादिषु प्रवर्तन्ते । सत्त्वरजस्तमसां चाङ्गाङ्गिभावनियमाद्विपर्ययाशक्तितुष्टिभिः प्रतिहन्यन्त इति न सर्वेषां सर्वदा सिद्धिर्भवति । अत एतदुक्तं सिद्धेः पूर्वोऽङ्कुशस्त्रिविध इति । यथा च सिद्धेः विपर्ययाऽशक्तितुष्टयः प्रतिपक्षाः, एवं सिद्धिरपि विपर्ययादीनाम् । सा ह्युत्पन्ना सर्वानेतान्निवर्तयति । कथम् ? अविपरीतज्ञानं विपर्ययमतीतानागतवर्तमानेषु सन्निकृष्टेषु विप्रकृष्टेषु इन्द्रियग्राह्येष्वतीन्द्रियेषु चाऽप्रतिघातादशक्तिं पुरुषस्य प्रकृतिविकारव्यतिरिक्तस्य दर्शनात्स-

१. Ch. अपदिश्यते, against Pna.

२. Cf. निरुक्त, न० का०

३. Ch. शासनं for भासनं ।

वीषु भूमिषु तुष्टिम् । एवमेतानि स्रोतांसि प्राणादयः कर्मयोनयश्च व्याख्याताः । एतेषां मार्गेऽवस्थापनात्परां सिद्धिं कैवल्यलक्षणामचिरेण प्राप्नोति । आह च

योनीनां सप्रमाणानां सम्यङ्‌ मार्गे नियोजनात् ।
स्रोतसां च विशुद्धत्वान्निरासङ्गमतिश्चरेत् ॥ इति ॥५१॥

॥ इति युक्तिदीपिकायां नवममाह्निकम् ॥



एवं यत्पूर्वमपदिष्टं संयोगकृतः सर्ग (का० २१) इति तद्व्याख्यातम् । अत्रेदानीमाचार्याणां विप्रतिपत्तिः । धर्मादीनां शरीरमन्तरेणानुत्पत्तेः । शरीरस्य च धर्माद्यभावे निमित्तान्तरासम्भवादुभयमिदमनादि । तस्मादेकरूप एवायं यथैवाद्यत्वे तथैवातिक्रान्तास्वनागतासु कालकोटिषु सर्ग इति । आचार्य आह—नैतदेवम्, किं तर्हि प्राक्प्रधानप्रवृत्तेर्धर्माधर्मयोरसम्भवो बुद्धिधर्मत्वात्तस्याश्च प्रधानविकारत्वात्[1] । ततस्तद्व्यतिरिक्तं शब्दाद्युपलब्धिगुण[2]लक्षणं गुणपुरुषान्तरोपलब्धिलक्षणं चार्थमुद्दिश्य सत्त्वादयो महदहङ्कारतन्मात्रेन्द्रियभूतत्वेनावस्थाय परमर्षिहिरण्यगर्भादीनां शरीरमुत्पादयन्ति । षट्सिद्धिक्षयकालोत्तरं तु गुणविमर्दवैचित्र्याद्रजस्तमोवृत्त्यनुपाति संसारचक्रं प्रवृत्तम् ।

न विना भावैर्लिङ्गम्

देवमनुष्यतिर्यग्भावेन व्यवतिष्ठत इति वाक्यशेषः ।

न विना लिङ्गेन भावसंसिद्धिः ।

संसिद्धिरत्र निष्पत्तिरभिप्रेता ।

लिङ्गाख्यो भावाख्यस्तस्माद् द्विविधः प्रवर्तते सर्गः ॥५२॥

सोऽयं लिङ्गाख्यो भावाख्यश्च षट्सिद्धिक्षयकालादूर्ध्वं भवति । गुणसमनन्तरं तु अधिकारलक्षणः । तस्माद् द्विधा सर्गः अधिकारलक्षणो भावाख्यश्च । येषां तु धर्माधर्मशरीरयोः पर्यायेण हेतुहेतुमद्भावस्तेषां कारणमस्त्यव्यक्तमित्यत्र (का० १६) प्रतिविहितम् । येऽपि च सांख्या एवमाहुः—"धर्माधर्माधिकारवशात्प्रधानस्य प्रवृत्तिरिति" तेषामन्यतरपरिकल्पनानर्थक्यमिति । कथम् ? यदि तावदधिकार एवायं प्रधानप्रवृत्तयेऽलम्, किं धर्माधर्माभ्याम् ? अथ तावदन्तरेणाऽधिकारस्य प्रधानप्रवृत्तावसामर्थ्यम्, एवमपि किमधिकारेण ? तयोरेव प्रवृत्तिसामर्थ्यात् । तस्मादधिकारभावनिमित्तो द्विधा सर्गः । तत्र यथेदं शरीरमविभक्तं धर्मार्थकाममोक्षलक्षणासु क्रियासु विभक्तं भवेदित्यतः पाण्यादिविकल्पोऽस्य भवति, एवं सत्त्वसर्गोऽप्यविभक्तो धर्मार्थकाममोक्षलक्षणासु क्रियासु[3] समर्थो भवेदिति ॥५२॥

अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति ।
मानुष्यश्चैकविधः

अष्टौ विकल्पा अस्य सोऽयमष्टविकल्पः । अष्टप्रकारोऽष्टभेद इत्यर्थः । तद्यथा ब्रह्मप्रजापतीन्द्रपितृगन्धर्वनागरक्षःपिशाचाः । तैर्यग्योनश्च पञ्चधा भवति—पशुमृगपक्षिसरीसृपस्थावराः । मानुष्यश्चैकविधः, जात्यन्तरानुपपत्तेः । आह, किमेतावानेव भूतसर्गविकल्पः, आहोस्विदन्योऽस्तीति ? उच्यते—विकल्पान्तरमस्त्येतेषामेव स्थानानामन्तर्गणभेदात् । अयं तु

समासतो भौतिकः सर्गः ॥५३॥

किम् ? उपदिष्ट इति वाक्यशेषः । तत्र देवानां [4]साध्यमरुद्रुद्रादिभेदात् । तिरश्चां ग्राम्यारण्यादिभेदात् । मानुषाणां च ब्राह्मणक्षत्रियविट्शूद्रभेदात् । उद्भिद्भेदश्च विस्तरेणापदिश्यमान आनन्त्यमापादयेत् । तस्मात्समासतो भूतसर्गोऽपदिश्यते ॥५३॥

१. Pna. विकारित्वात् ।
२. Ch. omits °गुण°
३. Pna. °क्रियास्वसमर्थो°
४. Pna. साध्यरुद्रुद्रादि°; Ch. साध्यरुद्रादि°

आह, विकल्पान्तरवचनम्, स्रोतोभेदात् । दैवमानुषतैर्यग्योना इति त्रिविधो भूतानां विकल्प उपदिश्यते । स्रोतांसि तु चत्वार्युक्तानि । तस्माद्विकल्पान्तरं वक्तव्यमिति । उच्यते—न, गुणधर्मसंग्रहसामर्थ्यात् । सत्त्वबहुला ऊर्ध्वस्रोतसः । रजोबहुला अर्वाक्स्रोतसः । तमोबहुलास्तिर्यक्स्रोतसो मुख्यस्रोतसश्च । तस्मादनयोरभेदेनोपदेशः । आह, असुराद्युपसंख्यानं कर्तव्यम् । इतरेष्वनन्तर्भावादभेदेन वोपदेशः कार्यो न तु दैवमानुषतिरश्च इति । उच्यते—न, उक्तेष्वेव तत्संग्रहात् । असुराणां तावदैन्द्र एव स्थानेऽन्तर्भावः, पूर्वदेवत्वात् । पूर्वदेवा ह्यसुराः । किंच पर्यायेणेन्द्रत्वात् । धन्विप्रभृतीनां पर्यायेणेन्द्रत्वं श्रूयते । तथा यक्षाणां रक्षस्स्वेकरूपत्वात् । किन्नरविद्याधराणां गन्धर्वेषु, समानशीलत्वात् । प्रेतानां पितृष्वधिपतिसामान्यात् । तस्मात्त्रिविकल्प एव भूतसर्गः । स चायम्

ऊर्ध्वं सत्त्वविशालः

ऊर्ध्वमित्यनेनाष्टौ देवस्थानान्याह । तत्रायं सर्गः सत्त्वविशालः पिशाचेभ्यो रक्षसाम्, रक्षोभ्यो नागानाम्, नागेभ्यो गन्धर्वाणाम्, गन्धर्वेभ्यः पितृणाम्, पितृभ्यस्त्रिदशानाम्, तेभ्यः प्रजापतीनाम्, तेभ्योऽपि ब्रह्मणः । एवं विशालग्रहणं समर्थितं भवति ।

तमोविशालस्तु मूलतः सर्गः ।

मूलतस्तु सर्गस्तमोविशालः । पशुभ्यो हि मृगाणां प्रकृष्टतरं तमः । मृगेभ्यः पक्षिणाम्, पक्षिभ्यः सरीसृपाणाम्, सरीसृपेभ्यः स्थावराणाम् ।

मध्ये रजोविशालः

देवेभ्यस्तिर्यग्भ्यश्चावकृष्टासु भूमिषु यथा यथा सत्त्वतमसोर्निह्रासः तथा तथा रजसो वृद्धिः । मनुष्यास्तूभयोर्मध्यमिति तत्र परमः प्रकर्षो रजसः । अर्वाक्स्रोतसः सिद्धिरूपत्वादत्यन्तं क्रियाप्रवृत्तत्वात् । यथा च मानुषेषु रजःप्रकर्ष एवं ब्रह्मणः स्थाने सत्त्वस्य, स्थावरेषु तमसः ।

स खल्वयम्

ब्रह्मादिस्तम्बपर्यन्तः ॥५४॥

चतुर्दशभेदस्त्रिविकल्पः सत्त्वाद्यतिशयनिर्ह्रासविषयभावेन यः सर्गो व्याख्यातः ॥५४॥

अत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः ।

जराकृतं मरणकृतं जरामरणकृतम् । तत्र जराकृतं तावद्यथा बली[1]तरंगितगात्रत्वम्, दण्डमन्तरेण चङ्क्रमणादिष्वप्रवृत्तिः, सर्वेन्द्रियाणां विषयोपभोगेष्वसामर्थ्यम्, प्रबलकासश्वासता, सास्राविलेक्षणता, दशनानामस्थिरत्वम्, वर्णविकृतिः, शैथिल्यमभिव्याहारसंगो मन्दा स्मृतिरित्येवमादि । मरणकृतमपि पृथिव्यादीनां शरीरभावेनावस्थितौ सहभावप्रतिपक्षता स्वभावभेदवृत्तिसंग्रहपन्थिव्यूहावकाशदानादेरुपकारस्य प्रच्युतिः ।[2] इन्द्रियाधिष्ठानविकाराच्छब्दस्पर्शरूपरसगन्धानां सतामग्रहणमसतां च ग्रहणमभूताकारं सम्भवविपरीतं वा सर्वार्थानां ग्रहणम् । तद्यथा पौर्णमास्यां दक्षिणतः खण्डस्येन्दुमण्डलस्य पिशाचादीनां पाण्डरस्य च नभस इत्यादि । तथा वातादिवैषम्यात्समुपजनिताऽनेकप्रकारव्याधिः प्रभ्रश्यमानसकलेन्द्रियवृत्तिः स्रस्ताङ्गः ताम्रपीतास्राविलेक्षणो भ्रमदाहश्वासादिपरिगमान्तर्मर्मसन्धिर्जलार्थं दिशोऽवलोकयन् सब्रह्म-

१. Ch. बलि°, against Pna.

२. Pna. सहभावंतित्यक्षतां स्वभावभेदाद् वृत्तिसंग्रहापन्थिव्यूहावकाशदानादे... ।



लोकेष्वपि लोकेषु त्रातारमविन्दन् रागाद्यनेककालात्पक्वेनात्मग्रहेणात्मकार्यकरणोपह्रियमाणबुद्धिर्मन्दमन्देष्वपि स्मृतिप्रलम्भेषु दयितजनस्यात्मनश्चानुस्मरन्दशविधात्कुटुम्बाद्यः प्रभ्रश्यते सोऽयमवश्यम्भावी सर्वसत्त्वानां प्रकृष्टोद्वेगकारी चाव्युत्पन्नश्चापरिहार्यश्चानियतकालश्च महात्मभिः परमर्ष्यादिभिरन्धतामिस्रशब्देनापदिष्टो मरणकृतं दुःखम् । तच्चेदं दुःखं प्रधानमहदहंकारतन्मात्रेन्द्रियभूतविशेषलक्षणस्य तत्त्वपर्वणश्चैतन्यासम्भवात्पुरुष एव चैतन्यशक्तियोगादुपलभ्यते । तदपि समीक्ष्योक्तमाचार्येण अत्र जरामरणकृतं दुःखं प्राप्नोति चेतनःपुरुष इति । आह, जन्मकृतस्योपसंख्यानम् । यथैव हि जरामरणं चात्मनः प्रकृष्टोद्वेगकारकमेवं जन्माऽपि । तथा ह्ययं मातुरुदरे जरायुपरिवेष्टितशरीरोऽमेध्यपरिस्नुतो[1] व्रणमात्रायां गर्भधान्यां यथासुखमसम्भवात्परिपीतितगात्रो मातुरशनादिभिः पीड्यमानो गर्भावासे दुःखमनुभूय पश्चात्संवृतेनास्थिद्वयविवरेण निस्सृतो मूत्ररुधिरकलिलैः परिषिक्तगात्रो बाह्येन वायुना करैश्च संस्पर्शादसिभिरिव तुद्यमानः स्वसंवेद्यं दुःखमात्मनि वर्तमानमाख्यातुमसमर्थः स्वसुखदुःखसामान्यात्परत्र परिकल्पितसुखदुःखबुद्धिभिर्दृढगात्रैरुपचितक्लेशैश्च यात्यमानो जन्मदुःखमनुभवति । तस्मात्तदपि वक्तव्यमिति । उच्यते—न, अव्यापित्वात् । मानुषतिरश्चामेव जन्मकृतं दुःखं भवति न देवानाम् । कथम् ? तडिद्विलसितवत्क्षणमात्रेण शरीरप्रादुर्भावात् । जरामरणकृतं तु तेष्वपि न निवर्तते । तस्मात्प्राधान्यादेतदेवोपदिष्टं नेतरदिति । आह, इतरग्रहणाप्रसंगः, तुल्यत्वात् । न हि देवस्थानेषु जरामरणं वा श्रूयते, तस्मादव्यापित्वात्तयोरप्यग्रहणप्रसंगः । उच्यते—न, स्मृतिवचनात् । जीर्यतेऽनयेति जरा क्षय इत्युक्तं भवति । स च देवभूमावपि भवति । कस्मात् ? एवं ह्याह

रजोविषक्तिरङ्गेषु वैवर्ण्यं म्लानपुष्पता ।
पतिष्यतां देवलोकात्प्राणिनामुपजायते ॥

शक्रादीनां व्याधिश्रवणाच्छरीरक्षयः । एवं ह्याह—"त्वाष्ट्रीयं साम भवति इन्द्रं क्षाममपि न सर्वभूतानि प्रस्वापयितुं नाशक्नुवं स्तमेतेन साम्ना त्वाष्ट्रीयेणास्वापयदिति ।" तथा प्रजापतेर्वायुरक्षयीत् । दक्षाभिशापाच्च सोमस्य क्षयः । तथा "प्रजापतिर्वै सोमाय राज्ञे दुहितॄरदान्नक्षत्राणि, स रोहिण्यामेवावसत् । तान्यनपेक्ष्यमाणानि पुनरगच्छन् । तस्मात् स्वानऽनुपेयमाना पुनर्गच्छति । तान्यन्वागच्छत्तानि पुनरयाचत । तान्यस्मै न पुनरददात् । साऽब्रवीत्सर्वेष्वेव समासत् वसाथ ते पुनर्दास्यामीति । स रोहिण्यामेवावसत्तस्मिन्ननृते यक्ष्मोऽगृह्णात् । चन्द्रमा वै सोमो राजा यद्राजानं यक्ष्मोऽगृह्णात्तद्राजयक्ष्मस्य जन्म । स तृणमिवाशुष्यत् । स प्रजापता अनाथत । सोऽब्रवीत्सर्वेष्वेव समावद्वसाथ त्वाऽतो मोक्ष्यामीति। तस्माच्चन्द्रमाः सर्वेषु नक्षत्रेषु समावद्वसति । तं वैश्वदेवेन चरुणाऽमावस्यां रात्रीमया यजन्ते नैनं यक्ष्मोदमुञ्चदित्यादि ।" तस्माद्देवभूमावपि जराकृतं दुःखमस्ति । तथा मरणकृतं भूम्यन्तरगमनात्तत्रोत्पन्नानां ययातिरुदाहरणम् । तथा गोपथब्राह्मणम्—"देवानां ह वा पञ्चदशशतानि आसंस्तानि ब्रह्मकिल्विषादक्षीयन्त । ततस्त्रयस्त्रिंशदेवासत तदेतदृचाप्युक्तम् । सोदर्याणां पञ्चदशानां शतानां त्रयस्त्रिंशदुदशिष्यन्त देवाः । शेषाः प्रासीयन्तेति ।[2]" श्वेतारण्ये चाऽन्तकस्य रुद्रेणकृतं दुःखमस्तीति ।

१. Ch. परिप्लुतो, against Pna.

२. Not found in the Bib. Ind. ed. of the गोपथब्राह्मण ।

[1]उदाहरणमात्राद्वा । अथवोदाहरणमात्रमेव दुःखानाम् । आदिशब्दलोपो वा वक्तव्यः । जरामरणकृतमेवोदाहरणत्वेनाभिप्रेतम् । न पुनर्दुःखान्तरम् । कस्मात् ? तत्रापि ह्यादिशब्दलोप उदाहरण मात्रत्वात् शक्त्या परिकल्पयितुमिदमित्युच्यते । न सर्वदुःखास्पदत्वात् । सर्वेषां हि दुःखानामास्पदं जरामरणकृतं साधारणम् । कथम् ? तद्बन्धुमित्राणामप्युद्वेगहेतुत्वात् । न तु जन्मकृतम्, सम्बन्धिनां प्रहर्षनिमित्तत्वात् । यतश्च ब्रह्मादौ स्तम्बपर्यन्ते जगति जरामरणकृतं दुःखं न कश्चिदतिवर्तते ।

लिङ्गस्याऽविनिवृत्तेस्तस्माद् दुःखं समासेन ॥५५ ॥

सुखलेशस्य तद्व्याप्तत्वात् । यावदिदं लिङ्गं न निवर्तते तावदवश्यं दुःखेन भवितव्यम् । पर्यायेण संस्कारस्य सामर्थ्याल्लोकान्तरोपपत्तेः । तथा चाह—

सुखं च दुःखं च हि संशयं च वारेणायं सेवते तत्र तत्र ।

कथम्पुनर्दुःखेन व्याप्तं सुखमिति चेत्, आब्रह्मणोऽशुद्धिक्षयातिशयोपपत्तेः । तस्याश्च दुःखमूलत्वात् । प्रजापतेरक्षिरोगश्रवणात्, इन्द्रस्य कामोपतापात् । गौतमपरिभावाद् रम्भायाश्चाऽभिशापात्पाषाणभावोपपत्तेः, नागानां सर्पसत्रायासात्, वैश्रवणस्य यस्काभिशापाद्धस्तिभावोपपत्तिः । जरत्कारोः पितॄणां च गर्तेऽवलम्बनात्, पिशाचानां मन्त्रौषधिमङ्गलप्रयोगैरुद्वासनान्मानुषतिरश्चां प्रत्यक्षत एव प्रायेण दुःखास्पदत्वात् । तस्मान्नास्ति संसारे कश्चित्प्रदेशो यत्र सह लिङ्गेनात्मानं दुःखं नाऽवाप्नुयादित्यत एवं प्रयतितव्यं येन लिङ्गस्यैवात्यन्तोच्छेदः । ततो हि सर्वदुःखानामत्यन्तोपशमः । समासग्रहणं तु सुखमोहयोरवकाशदानार्थम् । अन्यथा संसारे तयोरभाव एवाऽभ्युपगतः स्यात् ॥५५॥

एवं यथावत्सर्गमुपाख्यायोपसंहरन्नाह—

इत्येष प्रकृतिकृतः प्रवर्तते तत्त्वभूतभावाख्यः ।[2]

प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः ॥५६॥

इतिकरणेन सर्गसमाप्तिं द्योतयति । एष इत्युक्तमपि प्रत्याम्नायार्थं पुनरपेक्षते । प्रकृत्या कृतः प्रकृतिकृतः । अनेन वाक्यपरिसमाप्त्यर्थं वीतावीताभ्यां सिद्धं प्रधानास्तित्वम् । [3]अण्वादिप्रतिषेधं चापेक्षते । प्रकृतिकृत एव नाऽण्वादिकृतः । प्रवर्तत इति क्रियाप्रबन्धमाह । प्रवृत्तो न प्रवर्त्स्यति किं तर्हि प्रवर्तत एवानन्तानां शरीरादिभावेन परस्परानुग्रहेण च । नेयं क्रिया कदाचिदपि भूतभविष्यद्रूपा भवति । किन्तर्हि वर्तमानरूपा । यथा वहन्ति नद्यः, तिष्ठन्ति पर्वता इति । तत्त्वभूतभावाख्य इत्युक्तानां निगमार्थं प्रत्याम्नायं करोति । तत्त्वाख्यो महदादिर्भावाख्यो धर्मादिर्भूताख्यो व्योमादिः । पुरुषं पुरुषं प्रति विमोक्षः प्रतिपुरुषविमोक्षः । तदर्थं प्रतिपुरुषविमोक्षार्थम् । सर्वपुरुषाधिकारनिबद्धायाः सर्वशक्तेर्निराकांक्षीकरणार्थमित्यर्थः । स्वार्थ इव परार्थ आरम्भः । कार्यकारणभावेन । तत्र कार्यस्य तावच्छब्दादेः स्वार्थ इवेन्द्रियाणां विषयभावः । इन्द्रियाणामप्राप्तविषयाणां लौल्यमधिष्ठानविकारानुमेयं स्वार्थमिव । करणानां च संकल्पाभिमानाध्यवसायानां विषयद्वारिभावोपगमनं मनःप्रभृतीनां च स्वप्रवृत्तिविषयत्वम् ।

१. Ch. तूदाहरण°
२. गौडपाद and वाचस्पति—महदादिविशेषभूतपर्यन्तः ।
३. Ch. अवादि° for अण्वादि° in Pna.



मनोऽहंकारयोश्च बुद्धौ स्वप्रवृत्त्युपसंहारो बुद्धेश्च शान्तघोरमूढत्वं व्यवसायकर्तृत्वं च सत्त्वररजस्तमसां च प्रकाशप्रवृत्तिनियमलक्षणैर्धर्मैः परस्परोपकारित्वम् । न चैष स्वार्थः, सर्वस्यास्याचैतन्यात् । किं तर्हि परार्थ एवायमारम्भः संघातत्वादिति ।

आह, यदुक्तं प्रतिपुरुषविमोक्षार्थमयमारम्भ इति तदयुक्तम् । आचार्यविप्रतिपत्तेः । प्रतिपुरुषमन्यत्प्रधानं शरीराद्यर्थं करोति । तेषां च माहात्म्यशरीरप्रधानं यदा प्रवर्तते तदेतराण्यपि । तन्निवृत्तौ च तेषामपि निवृत्तिरिति पौरिकः सांख्याचार्यो मन्यते । तत्कथमप्रतिषिध्यैका प्रकृतिरभ्युपगम्यते इति ? उच्यते—न, प्रमाणाभावात् । न तावत्प्रत्यक्षत एव तच्छक्यं निश्चेतुम् । प्रधानानामतीन्द्रियत्वात् । लिङ्गं चाऽसन्दिग्धं नास्ति । आप्ताश्च नो नाऽभिदधुरतो मन्यामहे नैतदेवमिति । किंच एकेनार्थपरिसमाप्तेः । अपरिमितत्वादेतदेकं प्रधानमलं सर्वपुरुषशरीरोत्पादनाय । तस्मादन्यपरिकल्पनानर्थक्यम् । परिमितमिति चेदथ मतम्, परिमितं प्रधानमिति न, उच्छेदप्रसंगात् । एवमपि तस्योच्छेदः प्राप्तः क्षीरवत् । तथा च संसारोच्छेदप्रसंगः । किं च अनवस्थाप्रसंगात् । एकस्येश्वरस्य योगिनो वेच्छायोगादनेकशरीरत्वम् । तत्परिमितादयुक्तम् । प्रतिशरीरं वा प्रधानपरिकल्पने प्रधानाऽनवस्था भवति । परिमितशरीरकारणत्वाभ्युपगमादन्यपरिकल्पनानर्थक्यम् । ततश्च प्रधानैकत्वमेव । तस्मादयुक्तं प्रतिपुरुषं प्रधानानीति । यत्तूक्तं माहात्म्यशरीरप्रधानप्रवृत्तावितरेषां प्रवृत्तिस्तन्निवृत्तौ निवृत्तिरित्यत्र ब्रूमः—न, अतिशयाभावात् । यथा क्षेत्रज्ञानां निरतिशयत्वादितरेतराऽप्रवर्तकत्वमेवमेषामपि सातिशयत्वे वा प्रधानानुपपत्तिप्रसंगः, वैषम्यात् । तस्माद्युक्तं प्रतिपुरुषविमोक्षार्थमेका प्रकृतिः प्रवर्तत इति ॥५६॥

आह, तदनुपपत्तिराचेतन्यात् । इहाऽचेतनानां घटादीनामुद्दिश्य प्रवृत्तिरदृष्टा । सा चेदियमचेतना प्रकृतिरस्या अप्युद्दिश्य पुरुषार्थं प्रवृत्तिर्नोपपद्यते । भवति चेच्चैतन्यं तर्हि प्राप्तमस्याः । तत्र यदुक्तं प्रतिपुरुषविमोक्षार्थं प्रकृतेः प्रवृत्तिरिति एतदयुक्तमिति । उच्यते—न, दृष्टान्तोपपत्तेः ।

वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।

पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥५७॥

यथा क्षीरमचेतनं वत्सविवृद्धिमुद्दिश्य प्रवर्तते, एवं प्रधानमपि पुरुषविमोक्षमुद्दिश्य प्रवर्तते । न चास्य चैतन्यं स्यात् । साध्यत्वादयुक्तमिति चेत् स्यात् मतम्, साध्यमेतत् किं क्षीरस्योद्दिश्य वत्सविवृद्धिं प्रवृत्तिः, अथ नेति ? तस्मादुदाहरणं साध्यत्वादयुक्तमिति । एतच्चायुक्तम् । कस्मात् ? तदभावेऽभावात् तद्भावे च भावात् । यत्र नास्ति वत्सविवृद्धिस्तत्र न क्षीरस्य प्रवृत्तिरुपलब्धा । यत्राऽस्ति तत्रोपलब्धा । यद्यस्मिन् सति भवति तस्य तदर्था प्रवृत्तिर्दृष्टा । तद्यथा घटे कुम्भकारस्य । स चाऽयमीदृशोऽस्माकमुद्देशोऽभिप्रेतः यदुत तादर्थ्यम् । तस्मान्नास्त्युदाहरणसाध्यत्वमिति । असद्भावाऽभिधानात्सत्कार्यविरोध इति चेन्न, व्यक्तिपर्यायत्वात् । व्यक्तिपर्यायो हि तदिति शास्त्रलोकप्रामाण्यात् । शास्त्रं तावत् सत्तामात्रो महान् व्यक्तिमात्र इत्यर्थः । लोकेऽपि नास्त्यस्मिन्कूपे सलिलमित्युच्यते । न क्वचिदपि कूपे सलिलं नास्त्यभिव्यक्तं न तद् भवति । तस्मान्न सत्कार्यविरोधः । अदृष्टप्रेरणत्वादसिद्धिरिति चेदथ मतम् धर्माधर्मप्रेरितं क्षीरं प्रवर्तते न वत्सविवृद्ध्यर्थमिति, तदप्ययुक्तम् । कस्मात् ?

दोषसाम्यात्। धर्माधर्मावचेतनौ विवृद्धिकाले क्षीरं प्रवर्तयतस्तदवसाने च निवर्तयतः। तस्मादित्थमपि परिकल्प्यमाने समानो दोषः। ईश्वरप्रेरणादिति चेत् स्यान्मतम् ईश्वरस्तत्र क्षीरं प्रवर्तयते वत्सार्थं, न स्वयमिति। तदयुक्तम्। कस्मात्? प्रतिषेधात्। प्राक्प्रतिषिद्धमीश्वरकर्म। तस्मादिदमप्ययुक्तम्। एवं चेदवस्थितो दृष्टान्तः। वार्षगणानां तु यथा स्त्रीपुंशरीराणामचेतनानामुद्दिश्येतरेतरं प्रवृत्तिस्तथा प्रधानस्येत्ययं दृष्टान्तः। आह, कथमवगम्यते तादर्थ्यादुत्पन्नेन व्यक्तेन पुरुषस्य सम्बन्धो न पुनः सान्निध्यमात्रात्, भिक्षुवदिति? उच्यते— न, अनपवर्गप्रसंगात्। सान्निध्यमात्रात्पुरुषोपभोगमभ्युपगच्छतो नापवर्गप्रसंगः स्यान्नित्यसान्निध्यात्। तस्मादयुक्तमेतत्।[1] अप्रवर्तयितारं प्रति कार्यकारणानां प्रवृत्तिरयुक्तेति चेत् स्यान्मतम्—अप्रवर्तयिता कृष्यादीनां भिक्षुरतो न तेषामपि तं प्रति प्रवृत्तिः। एवमप्रवर्तयिता कार्यकरणानां पुरुषः। तस्मात्तेषामपि तं प्रति प्रवृत्तिरयुक्तेत्येतदप्यत एवाऽनैकान्तिकम्। वत्सो हि क्षीरस्याऽप्रवर्तयिताऽथ च तं प्रति तस्य प्रवृत्तिः। तस्माद्युक्तमेतत्पुरुषविमोक्षार्था प्रकृतेः प्रवृत्तिर्न चैतन्यप्रसंग इति ॥५७॥

आह, न, अप्रवृत्तिप्रसंगात्। यदि प्रधानस्य पुरुषकैवल्यार्था प्रवृत्तिस्तेन तदभावे कैवल्यं सिद्धमेवेत्यप्रवृत्तिप्रसंगः। अथ केवले पुरुषे प्रधानं प्रवर्तते न तर्ह्यस्य तदर्था प्रवृत्तिरिति। उच्यते—

औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः।
पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम् ॥५८॥

प्रागेवैतदपदिष्टम्—यथा दृश्यदर्शनशक्तियुक्तत्वादन्यतराभावे च तयोरानर्थक्यात्प्रधानपुरुषयोरितरेतरसम्बन्धं प्रत्यौत्सुक्यम्। दृष्टा चोपरमार्थाऽपि लोकस्यौत्सुक्यनिवृत्त्यर्था प्रवृत्तिस्तथा प्रधानस्याऽप्युपरमार्था प्रवृत्तिः। अथ दृश्यदर्शनशक्त्योरौत्सुक्यनिवृत्त्यर्थं प्रवर्तत इत्येकत्र कृतार्थत्वादितरेष्वप्रवृत्तिप्रसंग इति चेत् स्यादेतत्। प्रधानमेकस्य पुरुषस्यात्मानं प्रकाश्योपरमे दृश्यदर्शनशक्त्योरौत्सुक्यनिवृत्तिर्भविष्यति ॥५८॥

अप्रवृत्तिश्चेत्येतदपि नोपपन्नम्। कस्मात्? दृष्टान्तान्तरसामर्थ्यात्। तद्यथा किम्? उच्यते—

रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात्।
पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥५९॥

तत्र नानावर्णस्वभावविज्ञानानां प्रेक्षार्थिनां पुरुषाणां संघातो रङ्ग इत्युच्यते। नर्तक्याश्च[2] तदाराधना नृतिक्रियाऽनेकपुरुषार्था। यदि वाऽत्र कश्चिद् ब्रूयात् नृत्ताचार्येण कुशीलवैर्वा दृष्टैवेयं कस्मान्न निवर्तते? कथम्? अकृतार्थत्वात्। एवं सर्वपुरुषाणां कार्यकारणसम्बन्धेनौत्सुक्यवतां निराकांक्षीकरणार्थं प्रवृत्ता प्रकृतिः कथमेकस्य पुरुषस्यौत्सुक्यनिवृत्तौ कृतार्था स्यात्? तस्मान्नैकस्य पुरुषस्यात्मानं प्रकाश्य प्रकृतेर्निवृत्तिर्युक्तेति। अत्र च[3]...

१. Ch. °मेतप्रत्वर्त°, against Pna.
२. Ch. नर्तकी च, against Pna.
३. After this the rest of the folia 119a and the next one are left blank. The एकादशमाह्निकम् must have begun somewhere in this lost part.



कार्यकरणक्रियासाक्षी पुरुषः। तस्माद्ये भौतिकाः शिरःपाण्यादयो ये चाहंकारिकाः श्रवणादयो वचनादयः संकल्पाभिमानाध्यवसायाश्च ते लक्षणविपर्ययात्—नाहं नाष्टौ प्रकृतयः। तदेतदेवं तत्त्वानामभ्यासैकाग्रमनसो यतेः पुनः पुनरभ्यासात् एकस्याप्यस्मितारूपस्य परिकल्पितविषयभेदप्रतिषेधमुखेन

नास्मि न मे नाहमित्यपरिशेषम्।

आप्रकृतेः प्रतिपक्षग्रहणात्

अविपर्ययात्

पञ्चस्रोतसोऽस्याऽविद्यापर्वणो निवृत्तेः शान्तं ध्रुवं सकलभावानुबन्धप्रतिपक्षभूतं धर्माद्याप्यायितस्य बुद्धितत्त्वस्याऽसन्दिग्धमविपरीतं

विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥ ६४ ॥

आह, विशुद्धं केवलम्। अन्यतराऽनभिधानमर्थाभेदात्। यदेव विशुद्धं तदेव केवलमित्यर्थाभेदादन्यतरच्छक्यमवक्तुमिति। उच्यते—गुणान्तररूपनिवृत्तिहेतुत्वात्। रजस्तमोधर्माणां तावद् ग्रहणाच्छुद्धं संशयविपर्ययव्यतिरिक्तं च केवलं क्षेत्रज्ञपरिज्ञानेऽपूर्वमेव इति ॥ ६४ ॥

आह, तत्समकालमेव शरीरस्य पातः प्राप्नोति। सति ध[1]...

वस्थानेनाज्ञानहेतुकं शरीरमिति। उच्यते—अज्ञानहेतुकं शरीरम्। अथ चायं नानात्वदर्शी।

धर्मादीनामकारणप्राप्तौ।

तिष्ठति संस्कारवशाच्चक्रभ्रमवद् धृतशरीरः ॥६७॥

य....शरीरान्तरोपार्जिता धर्मादयो न तावत्कारणम्। बुद्धि......मुपसंप्राप्ता अकृतार्थत्वाद् बुद्धिश्च प्रधानं तदा तिष्ठत्ययं नानात्वदर्शी तस्य संस्कारस्य सामर्थ्यात्। को दृष्टान्तः? चक्रभ्रमवद्धृतशरीरः। तद्यथा कुम्भकारप्रयत्नविशिष्टेन दण्डेन घटादिनिष्पत्तियोग्यक्रिया चक्रस्य भ्रमः। तेन तुल्यं चक्रभ्रमवत्। यथा चक्रभ्रमणं घटार्थम्। निष्पन्ने घटे पूर्वसंस्कारानुरोधान्न निवर्तते न च तदा निवृत्तमिति कृत्वा संस्कारक्षयेऽप्यवतिष्ठते, एवं सम्यग्दर्शनार्थं शरीरं सम्यग्ज्ञानाऽधिगमे ऽपि न निवर्तते पूर्वसंस्कारवशात्। न च तदा निवृत्तमिति कृत्वा संस्कारक्षयेऽप्यवस्थाप्यत इति ॥६७॥

यदा तु संस्कारक्षये तन्निमित्तस्य शरीरस्य भेदः, अतः

प्राप्ते शरीरभेदे

धर्माधर्मौ कृतार्थौ कारणे बुद्धिलक्षणे लयं गच्छतः। यश्चास्य भूतावयवः शरीरारम्भकः स सर्वभूतेषु भूतानि तन्मात्रेषु, इन्द्रियाणि तन्मात्राणि चाहंकारे, अहंकारो बुद्धौ बुद्धिरव्यक्ते। सेयं तत्त्वानुपूर्वी तदर्थं प्रधानादुत्पन्ना परिसमाप्ते पुनः प्रधाने प्रलयं गच्छति। प्रधानमप्यर्थवशादेवास्य शरीराणि तेषु तेषु जात्यन्तरपरिवर्तेषु करोति। स चार्थश्चरितार्थः। अतः

चरितार्थत्वात् प्रधानविनिवृत्तौ।

अतीन्द्रियमसंवेद्यं लघु सर्वत्र सन्निहितं प्रशस्तमनिर्मितं विशुद्धमक्षयं निरतिशयम्

एकान्तमात्यन्तिकमभयं कैवल्यमाप्नोति ॥६८॥

१. Commentary on ६५, ६६ and a part of the ६७th कारिका is lost.

एतच्चावस्थानं बौद्धैर्निरुपधिशेष[1]निर्वाणलक्षणमपवर्गो व्याख्यातः। एतत्परं ब्रह्म ध्रुवममलमभयमत्र सर्वेषां गुणधर्माणां प्रतिप्रलयः। एतत्प्राप्य सर्वायासैः सर्वबन्धनैरनादिकालप्रवृत्तरागद्वेषवियुक्तो मुक्तो भवति। एतदर्थं ब्राह्मणा दयितपुत्रदारधनसम्बन्धमपहाय गुरुशुश्रूषापराः शरीरमरण्येषु यातयन्ति। कथं नामैकान्तिकमात्यन्तिकं च कैवल्यं स्यादिति। यत्रैवोत्थानं शास्त्रस्य तत्रैवोपसंहार आचार्येण कृतः ॥६८॥

आह, किमर्थं पुनरिदं शास्त्रं केन वा पूर्वं प्रकाशितमिति ? उच्यते—यदुक्तं किमर्थमिति—

पुरुषार्थार्थमिदम्[2]

कथं नामाज्ञानवशात्तत्संस्कारोपनिपतितानां प्राणिनामपवर्गः स्यादित्येवमर्थमिदं शास्त्रं व्याख्यातम्। यत्तूक्तं केनेति, उच्यते—

गुह्यं परमर्षिणा समाख्यातम्।

गुह्यमिति गूहनीयम्। रहस्यमकृतात्मनां यमनियमेष्वनवस्थितानामादरादप्यनध्येयम्। परमर्षिर्भगवान्सांसिद्धिकैर्धर्मज्ञानवैराग्यैश्वर्यै राविष्टपिण्डो विश्वाग्रजः कपिलमुनिः। तेन कपिलमुनिना समाख्यातम्। सम्यगाख्यातम्, चिराभ्यस्तस्य विद्यास्रोतसो निर्वचनसामर्थ्यात् स्यादेतत्, कथमिदं गुह्यमिति ? उच्यते—कथं वेदं गुह्यं न स्यात् ? भवाग्रोत्पन्नैरपि सनकसनातनसनन्दनसनत्कुमारप्रभृतिभिरनित्यानां

स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते च[3] यत्र भूतानाम् ॥६९॥

तत्र स्थितिस्तावद्रूपप्रवृत्तिफलनिर्देशेनोत्पत्तिरपि प्रकृतेर्महानित्यादिः। प्रलयोऽप्यविभागाद्वैश्वरूप्यस्येति वचनात्। औत्सुक्याऽनुपरमात्प्रकृतिपुरुषयोः स्थितिरुत्पत्तिर्दृश्यदर्शनशक्त्योः सापेक्षत्वात्। तथा चोक्तं—

पुरुषस्य दर्शनार्थः कैवल्यार्थस्तथा प्रधानस्य।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥ इति (का० २१)

प्रलयः प्राप्ते शरीरभेदे चरितार्थत्वात्प्रधानविनिवृत्ताविति (का० ६८)। अथवा स्थितिक्षणभङ्गप्रतिषेधात्कालान्तरेष्वस्यानाशादुत्पत्तिर्विपरिणामान्नाभूतप्रादुर्भावादकस्मादसम्भवात्, प्रलयोऽपि निमित्तान्तरात्तत्स्वाभाव्यादेव भूतानामपि व्यक्तानां निष्पत्तिमतामिति यावत्। एवं च महदादयोऽपि परिगृहीता इति। आह, पुरुषादयस्तर्हि परित्यक्ताः। कथं वा भूतशब्द इति ? उच्यते—वितथप्रतिषेधार्थत्वात्। यावत् किं चिदवितथं भूतं तस्य सर्वस्येह स्थित्यादय उच्यन्त इति। उत्पत्तिविनाशप्रतिषेधाविशेषात्। एवमपि पुरुषादीनामुत्पत्तिप्रलयावपि प्राप्नुतः। किं कारणम् ? अविशेषादिति। उच्यते—सम्भवतो विशेषणं भवति। तत्र स्थितिरेव पुरुषादीनाम्। इतरेषां तु स्थित्युत्पत्तिप्रलया इति विज्ञास्यामः ॥६९॥

१. Pna. निरूपाधिविशेष°

२. Ch. पुरुषार्थम्, against Pna. Usual reading is पुरुषार्थं ज्ञानमिदं, but Pna. seems to read पुरुपार्थार्थमिदं।

३. Ch. drops च.



आह, कस्मै पुनरिदं शास्त्रं परमर्षिणा प्रकाशितमिति ? उच्यते—

एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ।

तत्र पवित्रं पावनात्। अग्र्यं सर्वदुःखक्षपणसमर्थत्वात्। पवित्रान्तराणि पुनरेकदेशं[1] क्षालयन्त्यघमर्षणगङ्गादीनि। तस्मादिदमेवाग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ। आह, सम्प्रदानस्याकस्मिकत्वम्, धर्मादिनिमित्ताऽनुपपत्तेः। न तावत्परमर्षेर्धर्मार्थं शास्त्रप्रदानमुपपद्यते, फलेनाऽनभिष्वङ्गात्। नार्थकामार्थम्, शिष्याणामनायासप्रसंगात्। न मोक्षार्थम्, सांसिद्धिकेनैव ज्ञानेन तत्प्राप्तेः। तस्माद्विपरीतार्थाऽसम्भवात् परिशेषादकस्मादाचार्यः शास्त्रनिधानं प्रददाविति। उच्यते—नाऽकस्मात्, किं तर्हि अनुकम्पया प्रददौ। आध्यात्मिकाधिदैविकाधिभौतिकैर्दुःखैः पीड्यमानमासुरिमुपलभ्य स्वात्मनि च ज्ञानसामर्थ्यात्सति कार्यकारणसम्प्रयोगे दुःखानामप्रवृत्तिं परिज्ञाय शिष्यगुणांश्च कथं नाम यथा मम सुखदुःखेषु ज्ञानोपनिपातात्साम्यमेवमासुरेरपि स्यात्तद्द्वारेणाऽन्येषामपि पुरुषाणामेवमनुकम्पया भगवान्परमर्षिः शास्त्रमाख्यातवान्। यथा च परमर्षिरासुरये तथा

आसुरिरपि

दशमाय कुमाराय भगवत्—

पञ्चशिखाय

तेन च बहुधा कृतं तन्त्रम् ॥७०॥

बहुभ्यो जनकवशिष्ठादिभ्यः समाख्यातम्। अस्य तु शास्त्रस्य भगवतोऽग्रे प्रवृत्तत्वान्न शास्त्रान्तरवद् वंशः शक्यो वर्षशतसहस्रैरप्याख्यातुम् ॥७०॥

संक्षेपेणतुद्धाव ... हारीतवाद्धलिकैरातपौरिकार्षभेश्वरपञ्चाधिकरणपतञ्जलिवार्षगण्यकौण्डिन्यमूकादिक—

शिष्यपरम्परयाऽऽगतम्

भगवानीश्वरकृष्णश्च साहायकं शास्त्रम्। पूर्वाचार्यसूत्रप्रबंधे गुरुलाघवमनाद्रियमाणः पौरस्त्यान्याख्यानव्या[2]... न गर्भमतिप्रमादं ददातीति ग्रन्थभूयस्त्वमुपजायते। तच्चेदानीन्तनैः प्राणिभिरल्पत्वादायुषो ग्रन्थत एव न सूपपादं किं पुनः श्रवणप्रयोगाभ्याम्। आह च—चतुर्भिः प्रकारैर्विद्या सूपयुक्ता भवति—आगमकालेन स्वाध्यायकालेन प्रयोगकालेन च।[3] तत्र चास्यागमकालेनैवायुः पर्युपयुक्तं स्यात्ततश्च शास्त्रानर्थक्यम्। इत्यस्य मन्दधियामप्याशु ग्रहणधारणप्रयोगसम्पत्स्यादिति षष्ठितन्त्रादुपाख्यानगाथाव्यवहितानि वाक्यान्येकत उपमृद्य शिष्यानुकम्पार्थं यावत्.

ईश्वरकृष्णेन चैतदार्याभिः।

१. Pna. °रेकादश।

२. Ch. पौरस्त्यात् व्याख्यातव्या.... ।

३. Cf. महाभाष्य—चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवत्यागमकालेन स्वाध्यायकालेन प्रवचनकालेन व्यवहारकालेनेति। १.१.१.

सप्तत्या

संक्षिप्तमार्यमतिना

सर्वसस्वहितप्रवृत्तेन

सम्यग् विज्ञाय सिद्धान्तम् ॥७१॥

कथं चाऽस्य सम्यक्सिद्धान्तविज्ञानस्याप्यनेकग्रन्थशतसहस्राख्येयं सांख्यपदार्थं सतत्त्वमखण्डमार्याणां सप्तत्या संक्षिप्तवान् ॥७१॥

आह च—

सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्ठितन्त्रस्य ।
आख्यायिकाविरहिताः परवादविर्वजिताश्चापि ॥७२॥

यतश्च नारायणमनुजनकवशिष्ठद्वैपायनप्रभृतिभिराचार्यैः प्रधानपुरुषादयः पदार्थाः परिगृहीताश्चोपदिष्टाश्च प्रशस्ताश्चातः स्वभावतः प्रसिद्धमैश्वर्यस्य फलत ऋद्धया आर्यमार्गमलंकर्तुमिति भगवदीश्वरकृष्णेन पदार्थस्वरूपनिरूपणनिपुणसारमतिना परमर्ष्यादियोक्तागमेन प्रमाणत्रयं पुरस्कृत्य तर्कदृशा विचारः कृतः। न चास्य मूलकनकपिण्डस्येव स्वल्पमपि दोषजातमस्तीति ॥७२॥

आह च—

अज्ञानध्वान्तशान्त्यर्थमृषिचन्द्रमसश्च्युता ।
मलिनैस्तीर्थजलदैश्छाद्यते ज्ञानचन्द्रिका ॥
इति सद्भिरसम्भ्रान्तैः कुदृष्टितिमिरापहा ।
प्रकाशिकेयं सर्गस्य धार्यतां युक्तिदीपिका ॥
स्फुटाभिधेया मधुरापि भारती मनीषिणो नोपखलं विराजते।
कृशानुगर्भाऽप्यभितो हिमागमे कदुष्णतां याति दिवाकरद्युतिः ॥
नयन्ति सन्तश्च यतः स्वशक्तितो गुणं परेषां तनुमप्युदारताम् ।
इति प्रयात्वेष मम श्रमः सतां विचारणाऽनुग्रहमात्रपात्रताम् ॥

॥ इति युक्तिदीपिकायां सांख्यसप्ततिपद्धतौ चतुर्थं प्रकरणमेकादशं चाह्निकं सम्पूर्णम् ॥

कृतिरियं श्रीवाचस्पतिमिश्राणाम् (?)

---

विद्वज्जनाऽनुकम्प्यो दर्शनतर्कशास्त्रलब्धवैदुष्यः ।
पाण्डेयरामचन्द्रोऽगस्त्यकुलाऽम्भोधिजश्चन्द्रः ॥ १ ॥
वैयाकरणो युक्त्या युक्त्यागमशास्त्रकर्कशां प्रौढाम् ।
युक्तिदीपिकां श्रमेण समशोधयत्सतां प्रमोदाय ॥२॥

# APPENDIX—1

## सांख्यकारिकाः

दुःखत्रयाऽभिघाताज् जिज्ञासा तद[1]पघातके हेतौ ।
दृष्टे साऽपार्था चेन्नैकान्ताऽत्यन्ततो ऽभावात् ॥ १ ॥

दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयाऽतिशययुक्तः ।
तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात् ॥ २ ॥

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ ३ ॥

दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात् ।
त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि ॥ ४ ॥

प्रतिविषयाऽध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम् ।
तल्लिङ्गलिङ्गिपूर्वकमाप्तश्रुतिराप्तवचनन्तु[2] ॥ ५ ॥

सामान्यतस्तु दृष्टादतीन्द्रियाणां [3]प्रसिद्धिरनुमानात् ।
तस्मादपि चाऽसिद्धं परोक्षमाप्तागमात् [4]साध्यम् ॥ ६ ॥

अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् ।
सौक्ष्म्याद् व्यवधानादभिभवात् समानाऽभिहाराच्च ॥ ७ ॥

सौक्ष्म्यात्तदनुपलब्धिर्नाऽभावात् कार्यतस्तदुपलब्धिः[5] ।
महदादि तच्च कार्यं [6]प्रकृतिविरूपं सरूपञ्च ॥ ८ ॥

असदकरणादुपादानग्रहणात् सर्वसम्भवाऽभावात् ।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥ ९ ॥

हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥ १० ॥

१. माठर and गौडपाद—तदभिघातके; जयमङ्गला—तदवघातके.
२. जय०—आप्तश्रुतिराप्तवचनञ्च.
३. Others read प्रतीतिरनुमानात्.
४. युक्तिदीपिका comments it as साध्यम्; Pna. in the कारिका text सिद्धम्; see page 45. माठर also साध्यम्; others—सिद्धम्.
५. Others read तदुपलब्धेः.
६. Except गौडपाद others read प्रकृतिसरूपं विरूपञ्च.

त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि ।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥ ११ ॥[1]
प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।
अन्योऽन्याऽभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥ १२ ॥[2]
सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः ।
गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥ १३ ॥
अविवेक्यादिः[3] सिद्धस्त्रैगुण्यात् तद्विपर्ययाऽभावात् ।
कारणगुणात्मकत्वात् कार्यस्याऽव्यक्तमपि सिद्धम् ॥ १४ ॥
भेदानां परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद् वैश्वरूप्यस्य ॥ १५ ॥
कारणमस्त्यव्यक्तं प्रवर्तते त्रिगुणतः समुदयाच्च ।
परिणामतः सलिलवत् प्रतिप्रतिगुणाश्रयविशेषात् ॥ १६ ॥
संघातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात् ।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च ॥ १७ ॥
[4]जन्ममरणकरणानां प्रतिनियमादयुगपत् प्रवृत्तेश्च ।
पुरुषबहुत्वं सिद्धं त्रि[5]गुणादिविपर्ययाच्चैव ॥ १८ ॥
तस्माच्च विपर्यासात् सिद्धं साक्षित्वमस्य पुरुषस्य ।
कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥ १९ ॥
तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वे[6] च तथा कर्तेव भवत्युदासीनः ॥ २० ॥
[7]पुरुषस्य दर्शनार्थः कैवल्यार्थस्तथा प्रधानस्य ।
पङ्ग्वन्धवदुभयोरपि सयोगस्तत्कृतः सर्गः ॥ २१ ॥
प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः ।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि ॥ २२ ॥

१. Not explained in युक्तिदीपिका; see p. 60
२. Not explained in युक्तिदीपिका; see p. 60
३. वाचस्पति reads अविवेक्यादेः सिद्धिस्त्रैगुण्यात्तद्विपर्ययेऽभावात्.
४. The कारिका text in Pna. जनन°; commentary explains it as जन्म°. Except जयमङ्गला others जन्म°.
५. Others read त्रैगुण्यविपर्ययाच्चैव.
६. जयमङ्गला and माठर read गुणकर्तृत्वेऽपि.
७. Others—पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य.



अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम् ।
सात्त्विकमेतद् रूपं तामसमस्माद् विपर्यस्तम् ॥ २३ ॥
अभिमानोऽहङ्कारस्तस्माद् द्विविधः प्रवर्तते सर्गः ।
ऐन्द्रिय एकादशकस्तान्मात्रः पञ्चकश्चैव[1] ॥ २४ ॥
सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात् ।
भूतादेस्तान्मात्रः[2] स तामसस्तैजसादुभयम् ॥ २५ ॥
बुद्धीन्द्रियाणि [3]कर्णत्वक्चक्षूरसननासिकाऽऽख्यानि ।
[4]वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियाण्याहुः ॥ २६ ॥
[5]सङ्कल्पकमत्र मनस्तच्चेन्द्रियमुभयथा समाख्यातम् ।
अन्तस्त्रिकालविषयं तस्मादुभयप्रचारं तत् ॥ २७ ॥
[6]रूपादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः ।
वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम् ॥ २८ ॥
[7]स्वालक्षण्यं वृत्तिस्त्रयस्य सैषा भवत्यसामान्या ।
सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥ २९ ॥
युगपच्चतुष्टयस्य तु वृत्तिः क्रमशश्च तस्य निर्दिष्टा ।
दृष्टे तथाप्यदृष्टे त्रयस्य तत्पूर्विका वृत्तिः ॥ ३० ॥
स्वां स्वां प्रतिपद्यन्ते [8]परस्पराकूतहेतुकां वृत्तिम् ।
पुरुषार्थ एव हेतुर्न केनचित् कार्यते करणम् ॥ ३१ ॥

१. Pna. text of कारिका:—°तन्मात्रः पञ्चकश्चैव; commentary explaisn it as तान्मात्रः पञ्चकश्चैव; Ch. reads तान्मात्रपञ्चकश्चैव. वाचस्पति and जयमङ्गला—एकादशकश्च गणस्तन्मात्रपञ्चकश्चैव. गौडपाद—एकादशकश्च गणस्तन्मात्रः पञ्चकश्चैव. माठर reads ऐन्द्रिय एकादशकस्तन्मात्रपञ्चकश्चैव.
२. Others भूतादेस्तन्मात्रः.
३. माठर—श्रोत्रत्वक्चक्षूरसननासिकाऽऽख्यानि.
गौडपाद—चक्षुःश्रोत्रघ्राणरसनस्पर्शनकानि.
वाचस्पति—चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि.
४. वाचस्पति—वाक्पाणिपादपायूपस्थानि, others °यूपस्थान्.
५. भट्टोत्पल's commentary on बृहत्संहिता, p. 7. adopts this reading. परमार्थ's Chinese version supports reading of the first line, but his reading of the second line corresponds with the reading adopted by वाचस्पति. वाचस्पति and others read this कारिका as :

उभयात्मकमत्र मनः सङ्कल्पकमिन्द्रियञ्च साधर्म्यात् ।
गुणपरिणामविशेषान्नानात्वं बाह्यभेदाच्च ॥

माठर reads ग्राह्यभेदाच्च in place of बाह्यभेदाच्च.
६. Others except माठर, read शब्दादिषु.
७. माठर—स्वालक्षण्या.
८. जयमङ्गला—परस्पराकूतहैतुकीं ।

करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम् ।
कार्यञ्च तस्य दशधाहार्यं धार्यं प्रकाश्यञ्च ॥ ३२ ॥
अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम् ।
साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम् ॥ ३३ ॥
बुद्धीन्द्रियाणि तेषां पञ्च विशेषाऽविशेषविषयाणि ।
वाग्भवति शब्दविषया [1]शेषाण्यपि [2]पञ्चविषयाणि ॥ ३४ ॥
सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात् ।
तस्मात् त्रिविधं करणं द्वारि द्वाराणि शेषाणि ॥ ३५ ॥
एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः ।
कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ॥ ३६ ॥
सर्वं प्रत्युपभोगं यस्मात् पुरुषस्य साधयति बुद्धिः ।
सैव च विशिनष्टि [3]पुनः प्रधानपुरुषान्तरं सूक्ष्मम् ॥ ३७ ॥
तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः ।
एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च ॥ ३८ ॥
सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः ।
सूक्ष्मास्तेषां नियता मातापितृजा निवर्तन्ते ॥ ३९ ॥
पूर्वोत्पन्नमसक्तं नियतं महदादि सूक्ष्मपर्यन्तम् ।
संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ॥ ४० ॥
चित्रं यथाऽऽश्रयमृते स्थाण्वादिभ्यो विना यथा च्छाया ।
तद्वद् विना[4] विशेषैर्न तिष्ठति निराश्रयं लिङ्गम् ॥ ४१ ॥
पुरुषार्थहेतुकमिदं निमित्तनैमित्तिकप्रसङ्गेन ।
प्रकृतेर्विभुत्वयोगान्नटवद् व्यवतिष्ठते लिङ्गम् ॥ ४२ ॥
सांसिद्धिकाश्च भावाः प्राकृतिका [5]वैकृताश्च धर्माद्याः ।
दृष्टाः करणाश्रयिणः कार्याश्रयिणश्च कललाद्याः ॥ ४३ ॥
धर्मेण गमनमूर्ध्वं गमनमधस्ताद् भवत्यधर्मेण ।
ज्ञानेन चाऽपवर्गो विपर्ययादिष्यते बन्धः ॥ ४४ ॥
वैराग्यात् प्रकृतिलयः [6]संसारो भवति राजसाद्रागात् ।
ऐश्वर्यादविघातो विपर्ययात् तद्विपर्यासः ॥ ४५ ॥

१. Others, except माठर, read °शेषाणि तु.
२. जयमङ्गला—°विषयीणि.
३. माठर—ततः in place of पुनः.
४. Others—विनाऽविशेषैः.
५. Some read वैकृतिकाश्च.
६. माठर reads —संसारो राजसाद् भवति रागात्.



एष प्रत्ययसर्गो विपर्ययाऽशक्तितुष्टिसिद्ध्याख्यः ।
गुणवैषम्यविमर्दात् तस्य च[1] भेदास्तु पञ्चाशत् ॥ ४६ ॥
पञ्च विपर्ययभेदा भवन्त्य[2]शक्तिश्च करणवैकल्यात् ।
अष्टाविंशतिभेदा तुष्टिर्नवधाऽष्टधा सिद्धिः ॥ ४७ ॥
भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः ।
तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः ॥ ४८ ॥
एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा ।
सप्तदशवधा [3]बुद्धिविपर्ययात् तुष्टिसिद्धीनाम् ॥ ४९ ॥
[4]आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः ।
बाह्या विषयोपरमात् [5]पञ्च च नव तुष्टयोऽभिहिताः ॥ ५० ॥
ऊहः शब्दोऽध्ययनं दुःखविघाता[6]स्त्रयः सुहृत्प्राप्तिः ।
दानञ्च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः ॥ ५१ ॥
न विना भावैर्लिङ्गं न विना लिङ्गेन [7]भावसंसिद्धिः ।
लिङ्गाख्यो भावाख्यस्तस्माद् [8]द्विविधः प्रवर्तते सर्गः ॥ ५२ ॥
अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति ।
मानुष्यश्चैकविधः समासतो भौतिकः सर्गः ॥ ५३ ॥
ऊर्ध्वं सत्त्वविशालस्तमोविशालस्तु मूलतः सर्गः ।
मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तः ॥ ५४ ॥
अत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः ।
लिङ्गस्याऽविनिवृत्तेस्तस्माद् दुःखं [9]समासेन ॥ ५५ ॥
इत्येष [10]प्रकृतिकृतः [11]प्रवर्तते तत्त्वभूतभावाख्यः ।
प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः ॥ ५६ ॥

१. जयमङ्गला and माठर omit च.
२. माठर—भवन्त्यशक्तेश्च.
३. Ch. बुद्धेर्विपर्ययात्, against Pna. Others as Ch.
४. The कारिका text of Pna. always reads आध्यात्मिकाः, but in commentary आध्यात्मिक्यः.
५. वाचस्पति also reads the same way. माठर–पञ्च नव च तुष्टयोऽभिमताः. Ch. पञ्च नव तुष्टयोऽभिहिताः.
६. माठर reads —दुःखविघातत्रयं.
७. जयमङ्गला—भावनिष्पत्तिः; others भावनिर्वृत्तिः.
८. माठर reads—भवति द्विधा सर्गः.
९. Except माठर others read स्वभावेन.
१०. गौडपाद reads प्रकृतिकृतौ.
११. माठर reads महदादिविषयभूतपर्यन्तः; others—महदादिविशेषभूतपर्यन्तः.

वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥ ५७ ॥
औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः ।
पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम् ॥ ५८ ॥
रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात्[१] ।
पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥ ५९ ॥
[२]नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः ।
गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकञ्चरति ॥ ६० ॥
[२]प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति ।
या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥ ६१ ॥
[२]तस्मान्न ब[३]ध्यतेऽसौ न मुच्यते नाऽपि संसरति कश्चित् ।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥ ६२ ॥
[२]रूपैः [४]सप्तभिरेव बध्नात्यात्मानमात्मना प्रकृतिः ।
सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण ॥ ६३ ॥[५]
एवं तत्त्वाऽभ्यासान्नाऽस्मि न मे नाहमित्यपरिशेषम् ।
अविपर्ययाद् विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥ ६४ ॥
[६]तेन निवृत्तप्रसवामर्थवशात् सप्तरूपविनिवृत्ताम् ।
प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः [७]स्वस्थः ॥ ६५ ॥
[६]दृष्टा मयेत्युपेक्षक[८] एको दृष्टाऽहमित्युपरतैका[९] ।
सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य ॥ ६६ ॥
सम्यग्ज्ञानाऽधिगमाद् धर्मादीनामकारणप्राप्तौ ।
तिष्ठति संस्कारवशाच्चक्रभ्रम[१०]वद् धृतशरीरः ॥ ६७ ॥

१. जयमङ्गला—नृत्तात्.

२. युक्तिदीपिका lost on these कारिकाs.

३. माठर and गौडपाद read बध्यते नापि मुच्यते, while जयमङ्गला and वाचस्पति read—बध्यतेऽद्धा न मुच्यते.

४. वाचस्पति reads सप्तभिरेव तु; गौडपाद—सप्तभिरेवं.

५. The Chinese version does not read this कारिका.

६. These कारिकाs are left out in Pna.

७. वाचस्पति—सुस्थः.

८. गौडपाद reads रङ्गस्थ इत्युपेक्षक°

९. गौडपाद reads—दृष्टाऽहमित्युपरमत्येका; माठर—उपरताऽन्या; वाचस्पति—°रमत्यन्या.

१०. वाचस्पति—°भ्रमिवद्.



प्राप्ते शरीरभेदे चरितार्थत्वात् प्रधानविनिवृत्तौ ।
ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥ ६८ ॥
पुरुषार्थार्थ[१]मिदं गुह्यं परमर्षिणा समाख्यातम् ।
स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम् ॥ ६९ ॥
एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ ।
आसुरिरपि पञ्चशिखाय तेन च बहुधा[२] कृतं तन्त्रम् ॥ ७० ॥
शिष्यपरम्परयाऽऽगतमीश्वरकृष्णेन चैतदार्याभिः ।
संक्षिप्तमार्यमतिना सम्यग् विज्ञाय सिद्धान्तम् ॥ ७१ ॥
[३]सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य ।
आख्यायिकाविरहिताः परवाद[४]विवर्जिताश्चापि ॥ ७२ ॥[५]

१. Pna. पुरुषार्थार्थमिदं, but Ch. reads with others as—पुरुषार्थमिदं ज्ञानम्; युक्तिदीपिका comments upon it thus—कथंनामाज्ञानवशात् तत्संस्कारोपनिपतितानां प्राणिनामपवर्गः स्यादित्येवमर्थमिदं शास्त्रं व्याख्यातम्. This also supports our reading.

२. माठर—बहुलीकृतम्.

३. This कारिका is introduced in the युक्तिदीपिका with आह च, which is not the usual style of the author for the introduction of a कारिका. Moreover, he does not comment upon it. Is it then a part of the कारिका text ?

४. माठर—विवर्जिताश्चेति.

५. माठर reads the following कारिका after this—
तस्मात् समासदृष्टं शास्त्रमिदं नार्थतश्च परिहीनम् ।
तन्त्रस्य च बृहन्मूर्तेर्दर्पणसंक्रान्तमिव बिम्बम् ॥७३॥

## APPENDIX—2

### TABLES OF CLASSIFICATIONS

[In this Appendix various classifications, as they are found in the Sāṁkhya-kārikā, Yuktidīpikā and Sāṁkhya-tattvakaumudī, are given. For explanation of technical terms see the Appendix-3—सांख्यकोष]

**Table 1**

**षष्टिः पदार्थानाम्**

१. एकत्वम्
२. अर्थवत्त्वम्
३. पारार्थ्यम्
—प्रधानमधिकृत्य

४. अन्यता
५. अकर्तृत्वम्
६. बहुत्वम्
७. शेषवृत्तिः
—पुरुषमधिकृत्य

उभयमधिकृत्य—
८. अस्तित्वम्
९. वियोगः
१०. योगः

चूलिकार्था दश

११—१५ विपर्ययः (पञ्चविधः)
१६—२४ तुष्टिः (नवविधा)
२५—५२ अशक्तिः (करणानामसामर्थ्यम् अष्टाविंशतिधा)
५३—६० सिद्धिः (अष्टविधा)
—प्रत्ययाः (पञ्चाशत्)

**Table 2**

**चूलिकार्था दश**

| प्रधानमधिकृत्य | पुरुषमधिकृत्य | उभयमधिकृत्य |
|---|---|---|
| १. एकत्वम् | ४. अन्यता | ८. अस्तित्वम् |
| २. अर्थवत्त्वम् | ५. अकर्तृत्वम् | ९. वियोगः |
| ३. पारार्थ्यम् | ६. बहुत्वम् | १०. योगः |
| | ७. शेषवृत्तिः | |

**Table 3**

**तन्त्रसम्पत् or तन्त्रगुण or तन्त्रयुक्ति**

| | | | |
|---|---|---|---|
| १. सूत्रोपपत्तिः | ४. अन्यूनता | ७. उद्देशः | १०. संज्ञा |
| २. प्रमाणोपपत्तिः | ५. संशयोक्तिः | ८. निर्देशः | ११. उपदेशः |
| ३. अवयवोपपत्तिः | ६. निर्णयोक्तिः | ९. अनुक्रमः | १२. उत्सर्गः |
| | | | १३. अपवादः |
| | | | १४. अतिदेशः |

**Table 4**

**प्रत्ययाः (पञ्चाशत्)**

१-५—विपर्ययः (५)
६-१४—तुष्टयः (९)
१५-४२—अशक्तिः (२८)
४३-५०—सिद्धिः (८)

**Table 5**

**प्रमाणानि (३)**

१. प्रत्यक्षम्
२. अनुमानम्
→ पूर्ववत्
→ शेषवत्
→ सामान्यतोदृष्टम्
→→ वीतः
→→ अवीतः
३. आप्तवचनम्

**Table 6**

**अवयवाः (१०)**

व्याख्याङ्गभूताः (५)
→ जिज्ञासा, संशय, प्रयोजन, शक्यप्राप्ति, संशयव्युदासाः
परप्रतिपादनाङ्गभूताः (५)
→ प्रतिज्ञा, हेतुः, उदाहरणम्, उपनयः, निगमनम्

**Table 7**

**संज्ञा**

→ अर्थनिबन्धना
→ स्वरूपनिबन्धना

**Table 8**

**सर्गः**

भौतिकः
→ दैवः (८) — ब्राह्मः, प्राजापत्यः, ऐन्द्रः, पैत्रः, गान्धर्वः, याक्षः, राक्षसः, पैशाचः
→ तैर्यग्योनः (५) — पशुः, मृगः, पक्षी, सरीसृपः, स्थावरः
→ मानुष्यः (१)
लिङ्गाख्यः (तान्मात्रः)
भावाख्यः (पञ्चाशत् प्रत्ययाः)

### Table 9




### Table 10

**तत्त्वम् (२५)**

- पुरुषः
  - प्रकृतिः
    - महान्
      - अहङ्कारः
        - ज्ञानेन्द्रियाणि (५): श्रोत्रम्, घ्राणम्, चक्षुः, जिह्वा, त्वक्
        - कर्मेन्द्रियाणि (५): वाक्, पाणिः, पादः, पायुः, उपस्थः
        - मनः
        - तन्मात्राणि (५): आकाश—पृथिवी—वायु—तेजस्—अप्
          - महाभूतानि (५): आकाश—पृथिवी—वायु—तेजस्—अप्

### Table 11

| | |
|---|---|
| न प्रकृतिर्न विकृतिः (१) | —पुरुषः |
| अविकृतिः (१) | —मूलप्रकृतिः |
| प्रकृतिविकृतयः (७) | —महान्, अहङ्कारः, पञ्च तन्मात्राणि |
| विकृतिः (१६) | —पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, पञ्च महाभूतानि, मनः |

### Table 12

**गुणाः**

- सत्त्वम्
- रजः
- तमः



### Table 13

**अहङ्कारः**

- वैकृतः
- भूतादिः

### Table 14

**इन्द्रियाणि (११)**

- बुद्धीन्द्रियाणि (५): श्रोत्रम्, त्वक्, चक्षुः, घ्राणम्, रसनम्
- कर्मेन्द्रियाणि (५): वाक्, पणिः, पादः, पायुः, उपस्थः
- मनः

### Table 15

**अन्तःकरणानि (३)**

- महान्
- अहङ्कारः — वृत्तिः
- मनः
  - सामान्या — प्राणाद्याः पञ्च वायवः
  - असामान्या
    - महतोऽध्यवसायः
    - अहङ्कारस्याभिमानः
    - मनसः संकल्पः

### Table 16

**वायवः (५)**

- प्राणः
- अपानः
- व्यानः
- समानः
- उदानः

### Table 17

**करणानि (१३)**

- इन्द्रियाणि (११)
- महान्
- अहङ्कारः
  - व्यापारः: आहरणम्, धारणम्, प्रकाशः
  - कार्यम्: आहार्यम्, धार्यम्, प्रकाश्यम्

**Table 18**




**Table 19**




**Table 20**




**Table 21**

अकर्तृभावः (७)

१. विषयेषु अनध्यवसायः
२. सह गुणैः कार्यस्याकरणम्
३. स्थितप्रयोगस्याकरणम्
४. स्वात्मनोऽकरणम्
५. परतोऽकरणम्
६. आदेशादकरणम्
७. उभयतोऽकरणम्

**Table 22**






**Table 23**




**Table 24**




**Table 25**




**Table 26**




**Table 27**




**Table 28**




**Table 29**



## Table 30

**ज्ञानम्**

- ईश्वरकृष्णमते
  - सांसिद्धिकम्
  - प्राकृतिकं
  - वैकृतम्
- पञ्चाधिकरणमते
  - प्राकृतम्
    - तत्त्वसमकालम्
    - सांसिद्धिकम्
    - आभिष्यन्दिकम्
  - वैकृतम्
    - स्ववैकृतम्
    - परवैकृतम्

## Table 31

**प्रत्ययसर्गः** (५०)

- विपर्ययः (५)
- अशक्तिः (२८)
- तुष्टिः (९)
- सिद्धिः (८)

## Table 32

**विपर्ययः** (५)

- तमः (८)
  - अव्यक्ते महति अहङ्कारे पञ्चसु तन्मात्रासु
- मोहः (८)
  - अष्टविधे ऐश्वर्ये
- महामोहः (१०)
  - दशविधे कुटुम्बे
- तामिस्रः (१८)
  - दशविधे कुटुम्बे, अष्टविधे ऐश्वर्ये च
- अन्धतामिस्रः (१८)
  - दशविधे कुटुम्बे अष्टविधे ऐश्वर्ये च

## Table 33

**कुटुम्ब**

| | | | |
|---|---|---|---|
| १. | माता | ६. | पत्नी |
| २. | पिता | ७. | दुहिता |
| ३. | पुत्रः | ८. | गुरुः |
| ४. | भ्राता | ९. | मित्रम् |
| ५. | स्वसा | १०. | उपकारी |

## Table 34

**अशक्तिः** (२८)

- इन्द्रियाणां वैकल्यम् (११) (इन्द्रियवधाः)
- बुद्धिवैकल्यम् (१७) (बुद्धिवधाः)



## Table 35

**इन्द्रियवैकल्यम्** (११)

| | | | | | |
|---|---|---|---|---|---|
| १. | चक्षुषः | — आन्ध्यम् | ६. | मनसः | — उन्मादः |
| २. | श्रोत्रस्य | — बाधिर्यम् | ७. | त्वचः | — कौष्ठ्यम् |
| ३. | नासिकायाः | — अघ्रत्वम् | ८. | पाणेः | — कौण्यम् |
| ४. | वाचः | — मूकता | ९. | उपस्थस्य | — क्लैब्यम् |
| ५. | रसनस्य | — जडता | १०. | पायोः | — उदावर्तः |

११. पादयोः—पङ्गुता

## Table 36

**बुद्धिवैकल्यम्** (१७)

[1]तुष्टिविपर्ययात् (९)

| | | | |
|---|---|---|---|
| १. | अनम्भः | ५. | असुतारम् |
| २. | असलिलम् | ६. | असुपारम् |
| ३. | अनौघः | ७. | असुनेत्रम् |
| ४. | अवृष्टिः | ८. | असुमारीचम् |
| | | ९. | अनुत्तमाभयम् |

सिद्धिविपर्ययात् (८)

| | | | |
|---|---|---|---|
| १. | अतारम् | ५. | अप्रमुदितम् |
| २. | असुतारम् | ६. | अमोदमानम् |
| ३. | अतारयन्तम् | ७. | अरम्यकम् |
| ४. | अप्रमोदम् | ८. | असदाप्रमुदितम् |

## Table 37

**तुष्टिः** (९)

आध्यात्मिकी (४)

| | | |
|---|---|---|
| १. | प्रकृत्याख्या | — अम्भः |
| २. | उपादानाख्या | — सलिलम् |
| ३. | कालाख्या | — ओघः |
| ४. | भाग्याख्या | — वृष्टिः |

बाह्या (५)

१. सुतारम्
२. सुपारम्
३. सुनेत्रम्
४. सुमारीचम्
५. उत्तमाभयम्

## Table 38

**सिद्धिः** (८)[2]

| | | | |
|---|---|---|---|
| १. | ऊहः — तारम् | ५. | आधिभौतिकदुःखविघातः—प्रमुदितम् |
| २. | शब्दः —सुतारम् | ६. | आधिदैविकदुःखविघातः—मोदमानम् |
| ३. | अध्ययनम् —तारयन्तम् | ७. | सुहृत्प्राप्तिः —रम्यकम् |
| ४. | आध्यात्मिकदुःखविघातः—प्रमोदम् | ८. | दानम् — सदाप्रमुदितम् |

## Table 39

**कोशः** (८)

| | | | |
|---|---|---|---|
| १. | लोम | ५. | स्नायुः |
| २. | रुधिरम् | ६. | शुक्रम् |
| ३. | मांसम् | ७. | अशितम् |
| ४. | अस्थि | ८. | पीतम् |

**Table 40**

पञ्चपर्वाऽविद्या

| | | | | |
|---|---|---|---|---|
| तमः | मोहः | महामोहः | तामिस्रः | अन्धतामिस्रः |

Foot-note to Table—36

१. Other names for तुष्टिविपर्यय are found elsewhere as:

| | |
|---|---|
| १. सुवर्णा | ५. अपरा |
| २. अनिला | ६. सुपरा |
| ३. मनोज्ञा | ७. सुनेत्रा |
| ४. अदृष्टिः | ८. वसुनाडिका |
| | ९. अनुत्तमाम्भसिका respectively. |

Foot-note to table—38

२. वाचस्पति gives a different list of names for सिद्धिs, thus—

| | | |
|---|---|---|
| १. अध्ययनसिद्धिः | — | तारम् |
| २. शब्दसिद्धिः | — | सुतारम् |
| ३. ऊहसिद्धिः | — | तारतारम् |
| ४. सुहृत्प्राप्तिः | — | रम्यकम् |
| ५. दानसिद्धिः | — | सदामुदितम् |
| ६—८. तिस्रश्च मुख्याः | — | प्रमोद-मुदित-मोदमानाः. |

Cf. सांख्यतत्त्वकौमुदी on कारिका ५१.

## APPENDIX—3

### सांख्यकोष

[A Glossary of technical terms of Sāṁkhya]

**अ**

**अकर्तृभावः** —सप्तविधः । नात्मा विषयेषु स्वान्तःकरणसान्निध्येऽध्यवसायं कुरुते । सह गुणैः कार्यं न कुरुते । स्थितप्रयोगं न कुरुते । न स्वात्मनः, न परतः, नाऽप्यादेशात्, नोभयतः कार्यं कुरुते ।

नाऽध्यवसायं कुरुते पुरुषो नैव स्थितिं प्रयोगं वा ।
न स्वात्मनो न परतो न व्यपदेशान्न चोभयतः ॥

**अतिशयः** —क्रियाऽभ्यासः ।

**अतीतम्** —दृष्टविषयमदृष्टविषयमिति द्विविधम् । दृष्टविषयं प्रत्यभिज्ञानम् । अदृष्टविषया स्मृतिः । सा तु स्मृतिर्लिङ्गागमाभ्यामकस्माद् वा भवति ।

**अत्यन्तम्** —भूतस्याऽविनाशः ।

**अधिकरणम्** —सांख्यस्याधिकरणानि—प्रकृतिविकारवृत्तम्, कार्यकारणवृत्तम्, अतिशयाऽनतिशयवृत्तम्, निमित्तनैमित्तिकवृत्तम्, विषयविषयिवृत्तमिति पञ्च भवन्ति ।

**अध्यवसायः** —गौरेवायं पुरुष एवायमिति यः प्रत्ययो निश्चयोऽर्थग्रहणम् ।

**अनुमानम्** —वीतावीतभेदेन द्विधा । पूर्ववत्, शेषवत्, सामान्यतो दृष्टमिति च भेदः ।

**अनुश्रवः** —मन्त्रब्राह्मणं यावद् वा पुरातनमनुश्रूयमाणम् । यथाश्रुतिनिबन्धनाः स्मृतयः, अङ्गानि वेदास्तर्का वा ।

**अन्तःकरणम्** —महान्, अहङ्कारो मनश्चेति भेदेन त्रिकालविषयम् ।

**अन्तःकरणवृत्तिः** —असामान्या सामान्या चेति द्विधा । महतोऽध्यवसायः, अहङ्कारस्याऽभिमानः, मनसः सङ्कल्प इत्यसामान्या वृत्तिः । प्राणाद्याः पञ्च वायव इति सामान्यकरणवृत्तिः ।

**अन्धतामिस्रः** — s. अभिनिवेशः ।

**अपघातकः** —अपहन्तीत्यपघातकः ।

**अपानः** —अपक्रमणादपानः, योऽयं वायुः मूत्रपुरीपादीन् अधो नयति ।

**अपूर्वज्ञानम्** —ऊहः, शब्दः, अध्ययनं च ।

**अभिघातः** —अभिहन्यते ऽनेन । दुःखत्रयेणान्तःकरणेन चेतनाशक्तेरभिसम्बन्धः ।

**अभिनिवेशः** —अन्धतामिस्र इत्यर्थः । सोऽयमष्टादशधा भवति । अणिमादिकमष्टविधमैश्वर्यमासाद्य दश शब्दीन् भुञ्जानो भयमभिनिविशते ।

**अम्भः** —तुष्टिभेदः । यदा वीतावीतैः प्रधानमधिगम्य तत्पूर्वकत्वं च महदादीनां विकाराणाम्, आनन्त्याच्च प्रधानात्मनः कृत्स्नस्य महदादिभावेन विपरिणामाऽसम्भवादेकदेशस्याऽप्रकृतिविकारभूतस्य भोक्तृत्वमकर्तृत्वं चाऽध्यवस्य सङ्गद्वेषनिर्वृत्तिं लभते साऽऽद्या तुष्टिरम्भ इत्यभिधीयते ।

**अर्थवादः** —स्तुतिः । विहितस्य प्ररोचनार्थं या स्तुतिः सा ।

**अवयवाः** —दश । वीतस्याऽवयवाः जिज्ञासा—संशय—प्रयोजन—शक्यप्राप्ति—संशयव्युदासलक्षणा व्याख्याङ्गम् । प्रतिज्ञा—हेतु—दृष्टान्त—उपसंहार—निगमनानि परप्रतिपादनाङ्गम् ।

**अविकृतिः** —अविकारा, अनुत्पाद्या ।

**अविद्या** —तम इत्यर्थः । अविद्यया विपर्ययेण यदवधार्यते वस्तु अस्मितादयस्तत्स्वभावाः सन्तस्तदभिनिविशन्ते । तमसो भेदोऽष्टविधः—अव्यक्तमहदहङ्कारपञ्चतन्मात्रेष्वनात्मसु आत्मबुद्धिः, अष्टविधविषयत्वात् । सेयमविद्या पञ्चपर्वाऽप्युच्यते । s. पञ्चपर्वाऽविद्या ।

**अविविदिषा** —वेत्तुमिच्छाया निवृत्तिः ।

**अविशुद्धिः** —हिंसा । प्राणिनामिष्टशरीरव्यापादनात् । योऽसौ हिंसानिमित्तकः कारुण्यान्मनसि नः परिताप उत्पद्यते सा खल्वविशुद्धिरभिप्रेता । संशयविपर्ययावप्यविशुद्धिशब्देनोच्येते ।

**अविशेषः** —तन्मात्राणि ।

**अवीतः** —s. साधनम् ।

**अव्यक्तम्** —अङ्गभावमगच्छन्तां निर्लिखितविशेषाणां गुणानामवस्थितिः ।

**अव्यापि** —असर्वगतम् ।

**अशक्तिः** —करणवैकल्यादसामर्थ्यम् । इयमेव वधशब्देनोच्यते । बाह्यकरणवैकल्यं सह मनसा एकादशप्रकारम्, सप्तदशविधं च बुद्धिवैकल्यमित्यष्टाविंशतिभेदाऽशक्तिर्भवति ।

**असम्बन्धः** —अविद्यमानसम्बन्धः, अयुक्तसम्बन्धो वा ।

**असाधुः** —साधुभिरपाकृतः ।

**अस्मिता** —मोह इत्यर्थः । सेयमष्टविधा—अष्टविधैश्वर्यविषयत्वात् ।

**अहङ्कारः** —कर्तुः स्वात्मप्रत्यवमर्शात्मको योऽयमहमितिप्रत्यय उत्पद्यते स खल्वहङ्कारः । स चायं वैकारिक-तैजस-भूतादिभेदेन त्रिविधः ।

**आ**

**आकूतम्** —अभिप्रायः, इच्छा, सङ्कल्पः ।

**आधिदैविकम्** —शीतोष्णवातवर्षाऽशन्यवश्यायावेशनिमित्तम् ।

**आधिभौतिकम्** —मनुष्यपशुमृगपक्षिसरीसृपस्थावरनिमित्तम् ।

**आध्यात्मिकम्** —शारीरं मानसं च ।

**आनुश्रविकः** —अनुश्रवे भवः । s. अनुश्रवः ।

**आप्तः** —व्युपगतरागादिदोषः, असन्दिग्धमतिः, अतीन्द्रियार्थद्रष्टा ईश्वरमहर्षिप्रभृतिर्जनः ।

**आप्तश्रुतिः** —आप्तवचनम् । आप्तेभ्यः श्रुतिः—अपुरुषबुद्धिपूर्वक आम्नायः स पुरुषनिःश्रेयसार्थं प्रवर्तमानो निःसंशयं प्रमाणम् । मन्वादिनिबन्धनानां च स्मृतीनां वेदाङ्गतर्केतिहासपुराणानां शिष्टानां नानाशिल्पाऽभियुक्तानां चाऽदुष्टमनसां यद् वचस्तत् प्रमाणम् ।



**आलोचनम्** —ग्रहणम् ।

**आश्रितम्** —आधेयम् ।

**इ**

**इन्द्रियम्** —बुद्धीन्द्रियाणि पञ्च, कर्मेन्द्रियाणि पञ्च मन इत्येकादश ।

**इन्द्रियवधः** —एकादशेन्द्रियाणामशक्तिरसामर्थ्यं वा वैकल्याद् भवति । स्वसंस्कारविषययोगात् प्रकर्षापन्नेन तमसा ग्रहणरूपस्य सत्त्वस्य अभिभवात् स्वविषयेष्वप्रवृत्तिः । एकादशविधोऽयं वधः । तद्यथा—

बाधिर्यमान्ध्यमघ्रत्वं मूकता जडता च या ।
उन्मादकौष्ठ्यकौण्यानि क्लैव्योदावर्तपङ्गुताः ॥

**इन्द्रियवृत्तिः** —शब्दादिषु पञ्चानामालोचनमात्रमिति बुद्धीन्द्रियवृत्तिः । वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानां कर्मेन्द्रियाणां वृत्तिः ।

**उ**

**उत्तमाभयम्** —तुष्टिभेदः । उपभोगार्थेनाऽवश्यमन्योपघातः कार्यो निहितदण्डेन वा विषयोपभोगस्त्याज्य इत्येतस्माद् दर्शनान्माध्यस्थ्यं लभते, सा नवमी तुष्टिरुत्तमाभयमित्युच्यते ।

**उदानः** —वायुभेदः । मूर्धारोहणादात्मोत्कर्षणाच्च । यस्त्वयं प्राणापानसमानानां स्थानान्यतिक्रम्य रसं धातूंश्चादाय मूर्धानमारोहति ततश्च प्रतिहतो निवृत्तः स्थानकरणाऽनुप्रदानविशेषात् शब्दस्याऽभिव्यक्तिनिमित्तं भवति ।

**उदाहरणम्** —निदर्शनम्, दृष्टान्तः । हेतोः प्रमेयसहभावित्वनिदर्शनम् ।

**उपनयः** —साध्यदृष्टान्तयोरेकक्रियोपसंहारः ।

**उपष्टम्भः** —प्रयत्नः ।

**उपादानम्** —कारणं तन्त्वादि ।

**ए**

**एकान्तः** —नियमेन भावः ।

**एकेन्द्रियसंज्ञा** —विरागभेदः । विपरिपक्वसर्वेन्द्रियस्तु सङ्कल्पमात्राऽवस्थितकषायो यदा भवति तदा एकेन्द्रियसंज्ञा विरागस्य भवति । निवृत्तसर्वेन्द्रियविषयेच्छस्य यतेरेकमेव मनोलक्षणमिन्द्रियं तदा परिपक्वं भवति ।

**ऐ**

**ऐश्वर्यम्** —अप्रतीघातलक्षणम् । अष्टविधम्—अणिमा, महिमा, लघिमा, गरिमा, प्राप्तिः, प्राकाम्यम्, ईशित्वम्, वशित्वं च ।

**ओ**

**ओघः** —तुष्टिभेदः । दृश्यन्ते च प्राणिनां कालाऽनुरूपाः स्वभावाहारविहारव्यवस्थाः तस्मादसावेव कारणम् । तदेकदेशश्चाप्रकृतिविकारभूतो भोक्तेत्येतस्माद् दर्शनात् सङ्गद्वेषनिवृत्तिं लभते । सा तृतीया तुष्टिरोघः ।

क

**करणम्** —एकादशेन्द्रियाणि बुद्धिरहङ्कारश्चेति त्रयोदशविधम् ।

**करणकार्यम्** —आहार्यम्, धार्यम्, प्रकाश्यं च । कर्मेन्द्रियाणां वाक्पाणिपादपायूपस्थानां यथाक्रमं वचनादानविहरणोत्सर्गानन्दा यथायथमाहार्यम् । ते च दिव्यादिव्यादिव्यतया दशेति दशविधमाहार्यमप्यन्तःकरणस्य त्रयस्य प्राणादिलक्षणया वृत्त्या शरीरम्, तच्च पार्थिवादि पाञ्चभौतिकम् । तदेतत् शरीराणि पञ्चविधानि दिव्यादिव्यतया दशेति धार्यमपि दशधा । बुद्धीन्द्रियाणां शब्दस्पर्शरूपरसगन्धा यथायथं व्याप्याः, ते च दिव्यादिव्यतया दशेति प्रकाश्यमपि दशधा ।

**करणव्यापारः** —आहरणम्, धारणम्, प्रकाशश्चेति त्रिधा । s. करणकार्यम् ।

**कर्मयोनिः** —धृतिः, श्रद्धा, सुखा, विविदिषा, अविविदिषा च ।

**कर्मेन्द्रियाणि** —वाक्, पाणिः, पादः, पायुः, उपस्थश्चेति पञ्च, यैः कार्यं क्रियते ।

**कारणम्** —निवृत्तविशेषाणामविभागात्मनाऽवस्थानं कारणम् ।

**कार्यम्** —सूक्ष्माणां मूर्तिलाभः । कारणादनर्थान्तरभूतम् ।

**कालः** —क्रियमाणक्रियाणां विशिष्टाऽवधिस्वरूपप्रत्ययनिमित्तत्वम् । क्रियास्वेव कालसंज्ञा । s. ओघः ।

**कुटुम्बः** —दशविधः । मातृ-पितृ-पुत्र-भ्रातृ-स्वसृ-पत्नी-दुहितृ-गुरु-मित्रो-पकारिणः ।

**कोशः** —लोम-रुधिर-मांसाऽस्थि-स्नायु-शुक्रलक्षणः षड्विधः । अशितपीताभ्यां सहाऽष्टौ–इत्यपरे । सूक्ष्मशरीरमेतैः कोशैरावेष्टितम् ।

**क्रिया** —परिणामलक्षणा प्रस्पन्दलक्षणा चेति द्विविधा ।

**क्षयः** —अत्यन्ताभावपर्यायः ।

ग

**गुणः** —सत्त्वरजस्तमांसि ।

**गुरुत्वम्** —कार्यस्याऽधोगमनहेतुर्धर्मः ।

**ग्रहणम्** —विषयसम्पर्कात् ताद्रूप्यापत्तिरिन्द्रियवृत्तिः ।

च

**चूलिकार्थाः** —मूलिकार्था अप्येत उच्यन्ते । ते च दश तद्यथा—प्रधानास्तित्वम्, एकत्वम्, अर्थवत्त्वम्, अन्यता, पारार्थ्यम्, अनैक्यम्, वियोगः, योगः, शेषवृत्तिः, अकर्तृत्वञ्चेति ।

ज

**जन्म**— महदादेः सूक्ष्मशरीराश्रितस्य लिङ्गस्य यथासंस्कारं बाह्येन शरीरेण सम्बन्धः ।

**जरा** —जीर्यतेऽनयेति जरा, क्षय इत्यर्थः ।

**जिज्ञासा** —ज्ञातुमिच्छा ।

**ज्ञः** —चेतनाशक्तिरूपत्वात् चित्रं गुणवृत्तं जानातीति ज्ञः ।

**ज्ञानम्** —द्विविधम्—शब्दाद्युपलब्धिलक्षणम्, गुणपुरुषान्तरोपलब्धिलक्षणं च । शब्दाद्युपलब्धिलक्षणं प्रत्यक्षाऽनुमानागमरूपम् । गुणपुरुषान्तरोपलब्धिलक्षणं च द्विविधम्—अपूर्वम्, अभ्यासजं च । पुनरपि ज्ञानमीश्वरकृष्णमते सांसिद्धिकं प्राकृतिकं वैकृतिकं चेति त्रिविधम् । पञ्चाधिकरणमते तु द्विविधम्—प्राकृतिकं वैकृतिकं च । प्राकृतिकं त्रिविधम्—तत्त्वसमकालम्, सांसिद्धिकम्, आभिष्यन्दिकं च । वैकृतिकमपि द्विविधम्—स्ववैकृतिकम्, परवैकृतिकं च स्ववैकृतिकं तारकम् (q. v.), परवैकृतिकं सिद्धचन्तराणि । विन्ध्यवासिनस्तु नास्ति तत्त्वसमं सांसिद्धिकं च ।



त

**तत्त्वम्** —पञ्चविंशतिः । s. Appendix–2.

**तन्मात्राणि** —तुल्यजातीयविशेषाऽनुपपत्तेः गुणसामान्यमात्रमेव, न विशेषः ।

**तमस्** —अश्रेयसि श्रेयोऽभिमानः । s. अविद्या ।

**तामिस्रः** —क्रोधः । s. द्वेषः ।

**तारम्** —तारकमप्युच्यते । सिद्धिभेदः । यदा प्रत्यक्षाऽनुमानागमव्यतिरेकेणाऽभिप्रेतमर्थं विचारणामात्रबलेन प्रतिपद्यते साऽऽद्या सिद्धिः तारम् तारकमिति वा कथ्यते ।

**तारकम्** — s. तारम् ।

**तारयन्तम्** —सिद्धिभेदः । यदा त्वन्योपदेशादप्यसमर्थोऽभिप्रेतार्थं प्रतिपत्तुमध्ययनेन साधयति सा तृतीया सिद्धिः तारयन्तमित्युच्यते ।

**तुष्टिः** —चिकीर्षितादूनेन निर्वृतिः । बाह्याध्यात्मिकानां सुखदुःखमोहानां प्राप्तिष्वपगमेषु वा याऽव्यवस्थानलक्षणा सा । उपायनवत्वान्नव तुष्टयः । सेयं प्रथमतो द्विविधा—आध्यात्मिकी बाह्या च । आध्यात्मिकी च पुनः चतुर्भेदा—प्रकृत्युपादानकालभाग्याख्या । बाह्याऽपि पञ्चविषयोपरमात् पञ्चप्रभेदा । तत्र प्रकृतितुष्टिरम्भः, उपादानतुष्टिः सलिलम्, कालतुष्टिरोघः, भाग्यतुष्टिः वृष्टिरित्युच्यते । बाह्या च—सुतारम्, सुपारम्, सुनेत्रम्, सुमारीचम्, उत्तमाभयमिति ।

पुनरपि—शरीरशरीरिणोर्विशेषमुपलिप्समानेन योगिना यदनात्मन्यात्मबुद्धिरवस्थाप्यते सा खल्वाध्यात्मिकी सिद्धिः तुष्टिरित्यभिधीयते । अव्युत्पन्नात्मविचारस्य योगिनो विषयदोपदर्शनमात्रात् सङ्गदोषनिवृत्तिर्बाह्या तुष्टिः ।

**तुष्टिविपर्ययः** — s. बुद्धिवधः ।

**तैर्यग्योनसर्गः** —पञ्चधा—पशुमृगपक्षिसरीसृपस्थावराः ।

द

**दक्षिणाबन्धः** —संसारः । अयं दृष्टाऽनुश्रविकविषयाऽभिलाषाद् भवति ।

**दुःखम्** —दुःखयतीति दुःखम्, रज इत्यर्थः । s. Appendix–2.

**दृष्टम्** —प्रतिविषयाऽध्यवसायः । विषयं विषयं प्रति वर्तते प्रतिविषयम् । इन्द्रियमित्यर्थः । तस्मिन् योऽध्यवसायः । उपात्तविषयाणामिन्द्रियाणां वृत्त्युपनि-

पाति सत्त्वोद्रेकादरजस्तमस्कं यत् प्रकाशरूपं तद् दृष्टम् । एतच्च प्रत्यक्ष-शब्देनाप्युच्यते ।

**दैवसर्गः** —अष्टविधः—ब्रह्म-प्रजापतीन्द्र-पितृ-गन्धर्व-नाग-रक्षः-पिशाचाः ।

**द्रव्यम्** —अनेकद्रव्यमद्रव्यं चेति भेदेन द्विविधम् ।

**द्वारम्** —बाह्येन्द्रियाणि दशविधानि ।

**द्वारि** —अन्तःकरणं त्रिविधम् ।

**द्वेषः** —तामिस्र इत्यर्थः । अयमष्टादशधा—अष्टविधे कार्यकरणसामर्थ्ये अणिमादावैश्वर्ये, दशविधे च कुटुम्बे विषयेषु वा यः प्रतिहन्यमानस्याऽवेशः ।

### ध

**धर्मः** —श्रुतिस्मृतिविहितानां कर्मणामनुष्ठानाद् बुद्धचवस्थः सत्त्वावयव आशयभूतो धर्मः । स द्विविधः—ब्रह्मादिस्थानेष्वभिप्रेतशरीरेन्द्रियविषयोपभोग-निर्वर्तको ज्ञानाद्यङ्गभूतश्च प्रथमः । अग्निहोत्रहवनादिक्रियाऽनुष्ठानसाधनो यमनियमसाधन इतरः ।

**धृतिः** —व्यवसायादप्रच्यवनम् ।

### न

**निगमनम्** —उपनयनवशात् प्रतिज्ञाभ्यासः । समुदायस्य साध्यसिद्धये व्यापारनिर्देशः ।

**नियमः** —अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवमप्रमाद इति पञ्चविधः ।

### प

**पञ्चपर्वाऽविद्या** —विपर्ययोऽविद्या । सा च तमोमोहमहामोहतामिस्राऽन्धतामिस्रभेदात् पञ्च-पर्वेत्युच्यते ।

**पदार्थः** —- s. Appendix–2.

**परमर्षिः** —यस्य सत्त्वप्रधानं कार्यकरणं स परमर्षिः ।

**परिणामः** —यदा शक्त्यन्तराऽनुग्रहात् पूर्वधर्मं तिरोभाव्य स्वरूपादप्रच्युतो धर्मी धर्मान्त-रेणाविर्भवति तदवस्थानं परिणामः ।

**पुरुषार्थः** —भोगः, अपवर्गश्च ।

**पूः** —अहङ्कारावस्था संवित् ।

**पूर्ववत्** —पूर्वमिति कारणमुच्यते । पूर्वमस्यास्तीति पूर्ववत् । यदा कारणमभ्युदितं दृष्ट्वा भविष्यत्त्वं कार्यस्य प्रतिपद्यते तदनुमानं पूर्ववत् । तद्यथा मेघोदये भविष्यत्त्वं वृष्टेः ।

**प्रकाशकः** —करणस्य वृत्तिपटुत्वहेतुः ।

**प्रकृतिः** —अर्थान्तरं प्रकरोति या सा ।

**प्रकृतिबन्धः** —अष्टसु प्रकृतिषु लयः ।

**प्रकृतिविकारवृत्तम्**—पञ्चविधेऽधिकरणेऽन्यतमत् । तच्चतुर्धा भिद्यते—कारणमेव न कार्यम्, कारणं च कार्यं च, कार्यमेव न कारणम्, नैव कारणं नापि कार्यमिति ।

**प्रकृतिविकृतिः** —यत् प्रकृतिः कार्यान्तराणाम्, विकृतिः कारणान्तरस्य । तच्च महदहङ्कार-पञ्चतन्मात्राणि ।



**प्रतिज्ञा** —संशयं व्युदस्य साध्यावधारणं प्रतिज्ञा, प्रमेयवचनमित्यर्थः ।

**प्रत्यक्षम्** —अक्षमक्षं प्रति वर्तत इति प्रत्यक्षम् । द्वयं चाऽक्षं प्रति वर्तते—विषयोऽध्यव-सायश्च । विषयोऽनुग्राहकत्वेन, अनुग्राह्यत्वेतेतरः । s. दृष्टम् ।

**प्रत्ययः** —विषयेन्द्रियवृत्त्यनुकारेण निश्चयो गौरेवायमित्यादिः ।

**प्रत्ययसर्गः** —प्रतीयतेऽनेनेति प्रत्ययो बुद्धिः । तस्य सर्गः विपर्ययः, अशक्तिः, तुष्टिः, सिद्धिश्चेति चतुर्धा । प्रत्ययः पदार्थोऽपि । पदार्थानां सर्ग इत्यप्यर्थः । s. Appendix–2.

**प्रधानम्** — s. मूलप्रकृतिः ।

**प्रभूताः** —उद्भिज्जाः स्वेदजाश्च ।

**प्रमाणम्** —प्रमीयतेऽनेनेति । तत् त्रिविधम्—दृष्टमनुमानमाप्तवचनं चेति ।

**प्रमुदितम्** —सिद्धिभेदः । यदा आधिभौतिकानां मानुषादिनिमित्तानां सिद्धिप्रत्यनीकानां सामादिना तारसुतारतारयन्तानामन्यतमेन साधयति सा पञ्चमी सिद्धिः प्रमुदितम् ।

**प्रमेयम्** —प्रमीयते यत् ।

**प्रमोदम्** —सिद्धिभेदः । यदा आध्यात्मिकानां वातादीनां सिद्धिप्रत्यनीकानामायुर्वेद-क्रियाऽनुष्ठानेन विघातं कृत्वा तारसुतारतारयन्तानामन्यतमेन साधयति सा चतुर्थी सिद्धिः प्रमोदम् ।

**प्रवृत्तिः** —द्वेधा—हितकामप्रयोजना, अहितप्रतिषेधप्रयोजना च । विशेषतः पञ्च कर्मयोनयो धृत्याद्याः प्राणाद्याश्च पञ्च वायवः ।

**प्रसवधर्मः** —प्रस्पन्दनपरिणामौ ।

**प्राकृतिकः** —भावभेदः । परमर्षेरितरेषां भावः सत्त्वस्यापटुत्वात् कालान्तरेण प्रकृत्य-भिष्यन्दाद् द्रागिति भवति ।

**प्राणः** —वायुभेदः । योऽयं वायुर्मुखनासिकाभ्यां सञ्चरति, मुखनासिकाभ्यां प्रगमनात् प्रणतेश्च ।

### फ

**फलम्** —दृष्टमदृष्टं चेति द्विविधम् । दृष्टं सिद्धितुष्टचशक्तिविपर्ययलक्षणम् । अदृष्टं ब्रह्मादौ स्तम्बपर्यन्ते संसारे कर्मप्रतिलम्भः ।

### ब

**बन्धः** —दृश्यदर्शनभावेन प्रकृतेः पुरुषस्य च ।
अपेक्षा शास्त्रतत्त्वज्ञैर्बन्ध इत्यभिधीयते ॥
अज्ञानात् त्रिविधो बन्धो भवति—प्रकृतिबन्धः, दक्षिणाबन्धः, वैकारिक-बन्धश्च ।

**बाह्यकरणम्** —पञ्च बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाणि चेति दशधा । तदेतत् साम्प्रतकालं भवति ।

**बुद्धिधर्माः** —सात्त्विका धर्माः—धर्मो ज्ञानं वैराग्यमैश्वर्यं चेति चतुर्धा । तामसा धर्माः—अधर्मः, अज्ञानम्, अवैराग्यम्, अनैश्वर्यं चेति चतुर्धा । इत्थं समेत्याष्टौ बुद्धिधर्माः ।

**बुद्धिवधः** —सप्तदशविधः; नवतुष्टीनाम्, अष्टसिद्धीनां च विपर्ययात् ।

**बुद्धीन्द्रियाणि** —कर्णत्वक्चक्षूरसननासिकाख्यानि ज्ञानेन्द्रियाणि पञ्च ।

**बुद्धे रूपाणि** — s. बुद्धिधर्माः ।

### भ

**भाग्यम्** —धर्माधर्मयोर्भाग्यसंज्ञा । तौ च बुद्धिधर्मौ । s. वृष्टिः ।

**भावाः** —धर्मो ज्ञानं विराग ऐश्वर्यम्, अधर्मोऽज्ञानमवैराग्यमनैश्वर्यञ्चेत्यष्टधा । ते च पुनः त्रिविधाः सांसिद्धिकाः प्रकृतिका वैकृतिकाश्च ।

**भूतसर्गः** —दैवमानवतैर्यग्योनलक्षणस्त्रिविधः ।

**भूतादि** —तमःप्रधानम् ।

**भौतिकसर्गः** —s. भूतसर्गः ।

### म

**मरणम्** —पूर्वकृतस्य कर्मणः फलभोगपरिसमाप्तेः साम्प्रतस्य च फलभोगस्य प्रत्युपस्थाने लिङ्गस्य पूर्वशरीरत्यागः ।

**महान्** —सर्वोत्पाद्येभ्यो महापरिमाणयुक्तत्वात् महान्, बुद्धिरप्युच्यते ।

**महामोहः** —विपर्ययभेदः । बाह्ये विषये ममेदमित्यभिनिवेशः । s. रागः ।

**मातापितृजाः** —प्राणिनो द्विविधा—जरायुजा अण्डजाश्च ।

**मानसं दुःखम्** —कामक्रोधलोभमोहविषादभयेर्ष्याऽरत्यविशेषदर्शननिमित्तम् ।

**माहात्म्यशरीरः** —यस्य सत्त्वं रजोबहुलं स प्राणी ।

**मूलम्** —आधारः, प्रतिष्ठा ।

**मूलप्रकृतिः** —मूलं चाऽसौ प्रकृतिः, संज्ञा खल्वियं प्रधानस्य ।

**मूलिकार्था** —s. चूलिकार्थाः ।

**मोदमानम्** —सिद्धिभेदः । यदा शीतादीन्याधिदैविकानि द्वन्द्वानि सिद्धिप्रत्यनीकानि स्वधर्माऽनुरोधेन प्रतिहत्य तारसुतारतारयन्तानामन्यतमेन साधयति सा षष्ठी सिद्धिर्मोदमानम् ।

**मोहः** —भौतिकेष्वाकारेषु शिरःपाण्यादिषु करणवृत्तिषु चात्मग्रहः । s. अस्मिता ।

### य

**यतमानसंज्ञा** —विरागभेदः । इन्द्रियाणां विषयाभिलाषलक्षणकषायपाचनं प्रति यः प्रयत्न उत्साहः सा यतमानसंज्ञा ।

**यमः** —अहिंसा सत्याऽस्तेयमकल्कता ब्रह्मचर्यमिति पञ्च ।

### र

**रङ्गः** —नानावर्णस्वभावविज्ञानानां प्रेक्षार्थिनां पुरुषाणां सङ्घातः ।

**रजस्** —यः कश्चिदुपष्टम्भः चलता चोपलभ्यते तद्रजोरूपम् ।

**रम्यकम्** —सिद्धिभेदः । यदा कुशलं संस्पृष्टं सन्मित्रमाश्रित्य सन्देहनिवृत्तिं लभते सा रम्यकमिति सप्तमी सिद्धिः ।



**रागः** —महामोहः । शब्दादिषु पञ्चसु दिव्यादिव्यतया दशविधेषु विषयेषु रञ्जनीयेषु आसक्तिः ।

**रूपम्** —सप्तविधम्—धर्मः, वैराग्यम्, ऐश्वर्यम्, अधर्मः, अज्ञानम्, अवैराग्यम्, अनैश्वर्यं च । केषां चिन्मते—महानहङ्कारः पञ्च तन्मात्राणि, एकादशेन्द्रियाणि पञ्च महाभूतानि च रूपशब्देनोच्यन्ते ।

### ल

**लघु** —कार्यस्योद्गमनहेतुर्धर्मः ।

**लिङ्गाख्यः सर्गः** — s. सर्गः ।

**लोकः** —त्रिविधः—सत्त्वप्रधानः, रजःप्रधानः, तमःप्रधानश्च ।

### व

**वधाः** —इन्द्रियवधा एकादश, बुद्धिवधाः सप्तदश ।

**वरणम्** —कार्यगतं द्रव्यान्तरतिरोधानम् ।

**वशीकारसंज्ञा** —विरागभेदः । सङ्कल्पमात्राऽवस्थितस्यापि परिपाकः । अत्र यतिः इन्द्रियाणामन्तःकरणस्य च प्रवृत्तिनिवृत्त्योरीष्टे ।

**वायुः** —प्राणापानसमानोदानव्यानाः पञ्च वायवः । प्राणादयो द्विविधाः—अन्तर्वृत्तयो बहिर्वृत्तयश्च ।

**विकारः** —यत् कारणेभ्य उत्पद्यते । पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, पञ्च भूतानि मनश्च इति षोडश विकाराः ।

**विधिः** —तदर्थेनाऽपूर्वोपदेशः । यो हि लिङा, लोटा, कृत्यैर्वाऽपूर्वोपदेशः क्रियते स विधिः ।

**विनाशः** —कारणानां यः परस्परं संसर्गात् संस्थानविशेषपरिग्रहः तस्य विरोधिशक्त्यन्तराविर्भावत् व्यक्तिस्तिरोधीयत इत्येतद् विनाशशब्देन विवक्षितम् । स तु द्विविधः—आसर्गप्रलयात्तत्त्वानाम्, किञ्चित्-कालान्तरावस्थानादितरेषाम् ।

**विपर्ययः** —अश्रेयसः श्रेयस्त्वेनाऽभिधानम् । अविद्याऽस्मितारागद्वेषाभिनिवेशा यथासंख्यं तमोमोहमहामोहतामिस्रान्धतामिस्रसंज्ञकाः पञ्च विपर्ययभेदा भवन्ति ।

**विरागः** —वैराग्यमप्युच्यते । रागप्रतिपक्षभूतो ज्ञानाभ्यासोपजनितो बुद्धेः प्रसादः । तस्य तु यतमान-व्यतिरेक-एकेन्द्रिय-वशीकारसंज्ञा-श्चतस्रोऽवस्था भवन्ति ।

**विशेषाः** —स्थूलाः शब्दादयः पञ्च महाभूतसंज्ञकाः शान्तघोरमूढरूपाः ।

**विषयाः** —विषिन्वन्तीति विषयाः शब्दादयः । अथवा विषीयन्ते उपलभ्यन्ते इति विषयाः । ते च द्विविधाः—विशेषाः पृथिव्यादिलक्षणा अस्मदादिगम्याः, अविशेषास्तन्मात्रलक्षणा योगिनामूर्ध्वस्रोतसां च गम्याः ।

**वीतः** — s. साधनम् ।

**वृत्तिः** —व्यापारः ।

**वृष्टिः** —तुष्टिभेदः । दृश्यन्ते खल्वपि प्रकृत्युपादानकालविशेषेऽपि भाग्यविशेषात्

फलविशेषाः । तस्मान्न तत्संस्कार एव कारणम् । तदेकदेशश्चाऽप्रकृतिविकारभूतो भोक्तेत्येतस्माद् दर्शनात् सङ्गद्वेषनिवृत्तिं लभते सा चतुर्थी तुष्टिर्वृष्टिरित्यभिधीयते ।

**वैकारिकबन्धः** —यदष्टगुणमैश्वर्यमणिमादि तस्मात् स्वे स्वे विषयेऽविघात उत्पद्यते, तदभिरतिः ।

**वैकृतम्** —सात्त्विकम् ।

**वैकृतिकः** —भावभेदः । एते भावाः मानुषाणां साधारणानाम् । s. भावाः ।

**वैराग्यम्** — s. विरागः ।

**वैश्वरूप्यम्** —अस्तमितविशेषत्वम्, अविभागरूपेण विशिष्टमवस्थानम् ।

**व्यक्तम्** —रूप-प्रवृत्ति-फललक्षणम् ।

**व्यतिरेकसंज्ञा** —विरागभेदः । यदा केषांचित् इन्द्रियाणां परिपाकः तदा व्यतिरेकसंज्ञाऽवस्था भवति । व्यतिरिच्यन्ते हि तदा यतेरिन्द्रियाणि परिपक्वाण्यपरिपरिपक्वेभ्यः ।

**व्याधिनिदानम्** —त्रिविधम्—आहारः, विहारः, पूर्वकृतं कर्म च ।

**व्यानः** —वायुभेदः । यस्त्वालोमनखाच्छरीरं व्याप्य रसादीनां व्यूहं मर्मणां च प्रस्पन्दनं प्राणादीनां च स्थितिं करोति स व्यानः ।

**व्यापि** —सर्वगतम् ।

## श

**शारीरं दुःखम्** —वातपित्तश्लेष्मणां वैषम्यनिमित्तम् ।

**शेषवत्** —शेष इति विकारनाम, शिष्यत इति कृत्वा । शेषोऽस्यास्तीति शेषवत् । यदा कार्यनिर्वृतिं दृष्ट्वा कारणसद्भावं प्रतिपद्यते । तद्यथा कुमारकं दृष्ट्वा द्वयसमापत्तिम् ।

**श्रद्धा** —फलमनभिसन्धाय शास्त्रोक्तेषु कार्येषु अवश्यकर्तव्यताबीजभावः ।

## ष

**षोडशकः** —षोडश परिमाणमस्य षोडशकः सङ्घः ।

## स

**संसारः** —अष्टविकल्पो दैवः, तैर्यग्योनश्च पञ्चधा, मानुषश्चैकविध इत्येतावान् सांख्यानां संसारः ।

**संस्थानम्** —सामान्यस्य विशेषपरिग्रहः ।

**सङ्कल्पः** —अभिलाषः, इच्छा ।

**सत्त्वम्** —यत् किञ्चित् कार्यकरणे लघु प्रकाशकं च तत् सत्त्वरूपम् ।

**सदाप्रमुदितम्** —सिद्धिभेदः । यदा दौर्भाग्यं दानेनातीत्य तारसुतारतारयन्तानामन्यतमेन साधयति साऽष्टमी सिद्धिः सदाप्रमुदितम् ।

**सन्न्यासः** —इतिकर्तव्यतानां सर्वासामभावः ।



**समानः** —वायुभेदः । सहावस्थानात् सहभावाच्च । अयं प्राणापानयोर्मध्ये सहाऽवतिष्ठते ।

**समासः** —संक्षेपः ।

**सर्गः** —प्रधानपुरुषयोर्हि भोक्तृभोग्यभावापेक्षनिमित्तोऽयं तत्त्वसर्गो महादादिः, भावसर्गो धर्मादिः, भूतसर्गो ब्राह्मादिः ।

पुनश्च सर्गो द्विविधः—अधिकारलक्षणो भावाख्यश्च । अधिकारलक्षणः सर्गोः लिङ्गाख्यः । प्राक्प्रधानप्रवृत्तेः धर्माधर्मयोरसम्भवात् तद्व्यतिरिक्तं शब्दाद्युपलब्धिलक्षणं गुणपुरुषान्तरोपलब्धिलक्षणं चार्थमुद्दिश्य सत्त्वादयो महदहङ्कारतन्मात्रेन्द्रियभूतत्वेनाऽवस्थाय परमर्षिहिरण्यगर्भादीनां शरीरमुत्पादयन्ति । सोऽयमधिकारसर्गः । भावाख्यः सर्गः प्रत्ययसर्गः ।

पुनरपि—सर्गस्त्रिविधः—भौतिकः सर्गः, लिङ्गाख्यः सर्गः, भावाख्यश्च सर्गः ।

**सलिलम्** —तुष्टिभेदः । उपादाने एकदेश एव च कार्यकारणविधात्मा भोक्तेत्येतस्माद् दर्शनात् सङ्गद्वेषनिवृत्तिं लभते सा द्वितीया तुष्टिः सलिलम् ।

**सांसिद्धिकम्** —परमर्षेः सहैव कार्यकारणाभ्यां यज् ज्ञानमभिनिष्पद्यते प्रदीपप्रकाशवत् ।

**साधनम्** —लिङ्गम् । साधनस्य स्वरूपं द्विविधम्—साधारणमसाधारणं च । साधारणं साध्यसहभावि तत्प्रतिपत्तिहेतुत्वेन यथावदाश्रीयमाणो ऽर्थात्मा । असाधारणं पुनः परिमाणमन्वयः संघातपरार्थत्वमित्यादि । तत्र यदा हेतुः परपक्षमपेक्ष्य यथार्थेन स्वरूपेण साध्यसिद्धावपदिश्यते तदा वीताख्यो भवति । यदा तु स्वसाध्यादर्थान्तरभूतानां प्रासङ्गिकाणां क्षेपमपोहं कृत्वा परिशेषितः साध्यसिद्धावपदिश्यते तदाऽवीताख्यो भवति ।

**सामान्यतोदृष्टम्** —यत्रार्ऽर्थयोरव्यभिचारमुपलभ्य देशान्तरे कालान्तरे च तज्जातीययोरव्यभिचारं प्रतिपद्यते । तद्यथा क्वचित् धूमाग्निसम्बन्धं दृष्ट्वा क्वचिद् धूमान्तरेणाऽन्यतरस्यास्तित्वं प्रतिपद्यते । अथवा सहभुवामेकस्य विशिष्टगुणमुपलभ्य शेषाणामपि ज्ञानं भवति । तच्च प्रयोगभेदात् द्विविधम्—वीतः अवीतश्च ।

**सिद्धिः** —यथेष्टसाधनम् । अवगमः अवबोधो वा । इयमष्टविधा—ऊहः, शब्दोऽध्ययनं, दुःखविघातास्त्रयः, सुहृत्प्राप्तिः, दानञ्च । एत एव तारम्, सुतारम्, तारयन्तम्, प्रमोदम्, प्रमुदितम्, मोदमानम्, रम्यकम्, सदाप्रमुदितं चेत्युच्यन्ते ।

**सिद्धिविपर्ययः** — s. बुद्धिवधाः ।

**सुखा** —दृष्टानुश्रविकफलाभिलाषद्वारको हि बुद्धेराभोगः ।

**सुतारम्** —तुष्टिभेदः, सिद्धिभेदश्च । सुखार्जने प्रवृत्तस्य भूयिष्ठं दुःखमेवेत्यस्मात् दर्शनान्माध्यस्थ्यं लभते सा पञ्चमी तुष्टिः सुतारम् ॥ यदा स्वयमभिप्रेतार्थप्रतिपत्तौ प्रतिहन्यमानो गुरूपदेशात् प्रतिपद्यते सा द्वितीया सिद्धिः सुतारम् ।

**सुनेत्रम्** —तुष्टिभेदः । यदा कृतविषयरक्षोऽपि योगी क्षयदोषमुपन्यस्यति इत्येतस्माद् दर्शनान्माध्यस्थ्यं लभते सा सप्तमी तुष्टिः सुनेत्रमित्युच्यते ।

**सुपारम्** —तुष्टिभेदः । रात्रिन्दिवं च रक्षैकाग्रमनसः सुखार्थं प्रवृत्तस्य भूयिष्ठं दुःखमेवेत्यस्माद्दर्शनात् माध्यस्थ्यं लभते सा षष्ठी तुष्टिः सुपारम् ।

**सुमारीचम्** —तुष्टिभेदः । इन्द्रियाणां विषयाऽभिलाषान्निवृत्तिः सुखम्, विषयजिघृक्षया च दुःखम् । प्राप्तिरप्येषामनुपशान्तये तदुपभोगकौशलाय च । एतस्माद्दर्शनान्माध्यस्थ्यं लभते साऽष्टमी तुष्टिः सुमारीचम् ।

### ह

**हेतुः** —साधनसमासवचनम् । प्रमाणरूपमात्रवचनम् । s. साधनम् ।

## INDEXES

## Index of Verses Quoted in YD

## Index of Prose Passages Quoted in YD

---

## Index of Words in the Kārikās

[ Reference to Kārikā ]

## General Index

[ Reference to pages; Proper Names in bold ]

---